# प्रथमो पादः

**1-1 कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥** करोतीति कारुः शिल्पी कारकश्च । '7-3-33 आतो युक्...' वातीति वायुः । पायुर्गुदम् । जयत्यभिभवति रोगान् जायुरौषधम् । मिनोति प्रक्षिपति देहे ऊष्माणमिति मायुः पित्तम् । स्वादुः । साध्नोति परकार्यं साधुः । अश्नुते आशु शीघ्रम् । आशुर्व्रीहिः पाटलः स्यात् ।

**1-2 छन्दसीणः ॥** मा न आयौ ।

**1-3 दृसनिजनिचरिचटिभ्यो ञुण् ॥** दीर्यत इति दारु । स्नुः प्रस्थः सानुरस्त्रियाम् । जानु । जानुनी । इह '7-3-35 जनिवध्योश्च' इति न निषेधः । अनुबन्धद्वयसामर्थ्यात् । चारु रम्यम् । चाटु प्रियं वाक्यम् । मृगय्वादित्वात्कुप्रत्यये चटु इत्यपि ।

**1-4 किन्जरयोः श्रिणः ॥** किं शृणोतीति किंशारुः सस्यशूकं बाणश्च । जरामेति जरायुर्गर्भाशयः । गर्भाशयो जरायुः स्यात् ।

**1-5 त्रो रश्च लः ॥** तरन्त्यनेन वर्णा इति तालुः ।

**1-6 कृके वचः कश्च ॥** कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ।

**1-7 भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥** भरति बिभर्ति वा भरुः, स्वामी हरश्च । म्रियन्तेऽस्मिन्भूतानि मरुर्निर्जलदेशः । शेते शयुरजगरः । तरुर्वृक्षः । चरन्ति भक्षयन्ति देवता इममिति चरुः । त्सरुः खड्गादिमुष्टिः । तनु स्वल्पम् । तन्यते कर्मपाशोऽनया इति तनुः, शरीरं च । स्त्रियां मूर्तिस्तनुस्तनूः । धनुः शस्त्रविशेषः । धनुषा च धनुं विदुः । धनुरिवाजनि वक्र इति श्रीहर्षः । मयुः किंनरः । मद्गुः पानीयकाकिकेति रभसः । न्यङ्क्वादित्वात्कुत्वम् जश्त्वेन सस्य दः ।

**1-8 अणश्च ॥** लवलेशकणाणवः । चात्कटिवटिभ्याम् । कटति रसनां कटुः । वटतीति वटुः ।

**1-9 धान्ये नित् ॥** धान्ये वाच्येऽण उप्रत्ययः स्यात् स च नित् । नित्वादाद्युदात्तः । प्रियङ्गवश्च मेऽणवश्च मे । व्रीहिभेदस्त्वणुः पुमान् । निद्ग्रहणं फलिपाटीत्यादिसूत्रमभिव्याप्य संबध्यते ।

**1-10 शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥** शृणातीति शरुः । शरुरायुधकोपयोः । स्वर्यन्ते प्राणा अनेन स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । पुंसि भूम्न्यसवः प्राणाः । वसुर्हृदेऽग्नौ योक्त्रेऽशौ वसु तोये धने मणौ । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे । बिन्दुः ।

**1-11 स्यन्देः संप्रसारणं धश्च ॥** देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरः ।

**1-12 उन्देरिच्चादेः ॥** उनत्ति इन्दुः ।

**1-13 । ईषेः किच्च ॥** ईषेरुः स्यात्स च कित् आदेरिकारादेशश्च । ईषते हिनस्ति इषुः शरः । इषुर्द्वयोः ।

**1-14 स्कन्देः सलोपश्च ॥** कन्दुः ।

**1-15 सृजेरसुम् च ॥** चात्सलोप उप्रत्ययश्च । रज्जुः ।

**1-16 कृतेराद्यन्तविपर्ययश्च ॥** ककारतकारयोर्विनिमयः । तर्कुः सूत्रवेष्टनम् ।

**1-17 नावञ्चेः ॥** न्यङ्क्वादित्वात्कुत्वम् । नियतमञ्चति न्यङ्कुर्मृगः ।

**1-18 फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च ॥** फलेर्गुक् । फल्गु । पाटेः पटिः । पाटयतीति पटुः । नम्यतेऽनेन नाकुर्वल्मीकम् । मन्यते इति मधु । जायते इति जतु ।

**1-19 वलेर्गुक्च ॥** वल संवरणे ।

**1-20 शः कित्सन्वच्च ॥** श्यतेरुः स्यात्स च कित्सन्वच्च । शिशुर्बालः ।

**1-21 यो द्वे च ॥** ययुरश्वोऽश्वमेधीयः । सन्वदिति प्रकृते द्वेग्रहणमित्वनिवृत्त्यर्थम् ।

**1-22 कुर्भ्रश्च ॥** बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ । चादन्यतोऽपि । चक्रुः कर्ता । जघ्नुर्हन्ता । पपुः पालकः ।

**1-23 पृभिदिव्यधिगृधिधृषिभ्यः ॥** कुः स्यात् । पुरुः । भिनत्ति भिदुर्वज्रम् । '6-1-16 ग्रहिज्या- ' इति संप्रसारणम् । विरहिणं विध्यति विधुः । विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे । गृधुः कामः । धृषुर्दक्षः ।

**1-24 कृग्रोरुच्च ॥** करोतीति कुरुः । गृणाति गुरुः ।

**1-25 । अपदुःसुषु स्थः ॥** '8-3-98 सुषामादिषु च- ' इति षत्वम् । अपष्ठु प्रतिकूलम् । दुष्ठु । सुष्ठु ।

**1-26 रपेरिच्चोपधायाः ॥** अनिष्टं रपतीति रिपुः ।

**1-27 अर्जिदृशिकम्यमिपशियाधामृजिपसितुक्धुक्दीर्घहकाराश्च ॥** अर्जयति गुणान् ऋजुः । सर्वानविशेषेण पश्यतीति पशुः । कन्तुः । अन्धुः कूपः । पांशुर्ना न द्वयो रजः । तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः । बाधते इति बाहुः । बाहुः स्त्रीपुंसयोर्भुजः ।

**1-28 प्रथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च ॥** त्रयाणां कुः संप्रसारणं भ्रस्जेः सलोपश्च । पृथुः । मृदुः । न्यङ्क्वादित्वात्कुत्वम् । भृज्जति तपसा भृगुः ।

**1-29 लङ्घिबंह्योर्नलोपश्च ॥** लघुः । वालमूललघ्वलमङ्गुलीनां वा लो रत्वमापद्यते ॥ **रघुर्नृपभेदः । बहुः ।**

**1-30 ऊर्णोतेर्नुलोपश्च ॥** ऊरुः सक्थि ।

**1-31 महति ह्रस्वश्च ॥** उरु महत् ।

**1-32 । श्लिषेः कश्च ॥** श्लिष्यतीति श्लिकुर्भृत्यः । उद्यतो ज्योतिश्च ।

**1-33 आङ्परयोः खनिशृभ्यां डिच्च ॥** आखनतीत्याखुः । परं शृणातीति परशुः । पृषोदरादित्वादकारलोपात्पर्शुरपि ।

**1-34 हरिमितयोर्द्रुवः ॥** द्रु गतौ अस्मात् हरिमितयोरुपपदयोः कुः स च डित् । हरिभिर्द्रूयते हरिद्रुर्वृक्षः । मितं द्रवति मितद्रुः समुद्रः ।

**1-35 शते च ॥** शतधा द्रवति शतद्रुः । बाहुलकात्केवलादपि । द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च तद्वान् द्रुमः ।

**1-36 खरु शङ्कु पीयु नीलङ्गु लिगु ॥** पञ्चैते कुप्रत्ययान्ता निपात्यन्ते । खनते रेफश्चान्तादेशः । खरुः कामः क्रूरो मूर्खः अश्वश्च । शङ्कुर्ना कीलशल्ययोः । पिबतेरित्वं युगागमश्च ॥ **पीयुर्वायसः कालः सुवर्णं च । निपूर्वाल्लगि गतावस्मात्कुत्वं नेर्दीर्घश्च । नीलङ्गुः क्रिमिविशेषः शृगालश्च । नीलाङ्गुरिति पाठान्तरम् । तत्र धातोरपि दीर्घः । लगे सङ्गे अस्य अत इत्वं च । लगतीति लिगु चित्तम् । लिगुर्मूर्खः ।**

**1-37 मृगय्वादयश्च ॥** एते कुप्रत्ययान्ता निपात्यन्ते । मृगं यातीति मृगयुर्व्याधः । देवयुर्धार्मिकः । मित्रयुर्लोकयात्राभिज्ञः । आकृतिगणोऽयम् ।

**1-38 मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् ॥** मन्दुरा वाजिशाला । वाशुरा रात्रिः । मथुरा । चतुरः । चङ्कुरो रथः । अङ्कुरः । खर्जूरादित्वादङ्कूरोऽपि ।

**1-39 व्यथेः संप्रसारणं किच्च ॥** विथुरश्चोररक्षसोः ।

**1-40 मुकुरदर्दुरौ ॥** मुकुरो दर्पणः । बाहुलकान्मकुरोऽपि । दॄ विदारणे । धातोर्द्विर्वचनमभ्यासस्य रुक् टिलोपश्च । दर्दुरस्तोयदे भेके वाद्यभाण्डाद्रिभेदयोः । दर्दुरा चण्डिकायां स्याद्ग्रामजाले च दर्दुरमिति विश्वः ।

**1-41 मद्गुरादयश्च ॥** उरजन्ता निपात्यन्ते । माद्यतेर्गुक् । मद्गुरो मत्स्यभेदः । कबृ वर्णे । रुगागमः । कर्बुरः श्वेतरक्षसोः । बध्नातेः खर्जूरादित्वाद्बूरोऽपि । बन्धूरबन्धुरौ स्यातां नम्रसुन्दरयोस्त्रिषु इति रन्तिदेवः । (ग) कोकतेर्वा कुक् ॥ **कुक्कुरः । कुकुरः ।**

**1-42 असेरुरन् ॥** असुरः । प्रज्ञाद्यण् । आसुरः ।

**1-43 मसेश्च ॥** पञ्चमे पादे मसेरूरन्निति वक्ष्यते । मसूरा मसुरा व्रीहिप्रभेदे पण्ययोषिति । मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः । मसूरी पादरोगे स्यादुपधाने पुनः पुमान् । मसूरमसुरौ च द्वाविति विश्वः ।

**1-44 शावशेराप्तौ ॥** शु इति आश्वर्थे । श्वशुरः । पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोरित्यमरः ।

**1-45 अविमह्योष्टिषच् ॥** अविषः । महिषः ।

**1-46 अमेर्दीर्घश्च ॥** आमिषं त्वस्त्रियां मांसे तथा स्याद्भोग्यवस्तुनि ।

**1-47 रुहेर्वृद्धिश्च ॥** रङ्कुशम्बररौहिषाः । रौहिषो मृगभेदे स्याद्रौहिषं च तृणं मतमिति संसारावर्तः ।

**1-48 तवेर्णिद्वा ॥** तवेति सौत्रो धातुः । तविपताविषावब्धौ स्वर्गे च । स्त्रियां तविषी ताविषी नदी देवकन्या भूमिश्च । तविषी बलमिति वेदभाष्यम् ।

**1-49 नञि व्यथेः ॥** अव्यथिषोऽब्धिसूर्ययोः । अव्यथिषी धरारात्र्योः ।

**1-50 किलेर्बुक् च ॥** किल्बिषम् ।

**1-51 इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहिमुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥** इषिरोऽग्निः । मदिरा सुरा । मुदिरः कामुकाभ्रयोरिति विश्वमेदिन्यौ । खिदिरश्चन्द्रः । छिदिरोऽसिकुठारयोः । भिदिरं वज्रम् । मन्दिरं गृहम् । स्त्रियामपि । मन्दिरं मदिरापि स्यादिति विश्वः । चन्दिरौ चन्द्रहस्तिनौ । तिमिरं तमोऽक्षिरोगश्च । मिहिरः सूर्यः मुहिरः काम्यसभ्ययोः । मुचिरो दाता । रुचिरम् । रुधिरम् । बधिरः । शुष शोषणे । शुषिरं छिद्रम् । शुष्कमित्यन्ये ।

**1-52 अशेर्णित् ॥** आशिरो वह्निरक्षसोः ।

**1-53 अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः ॥** अजेर्वीभावाभावः । अजिरमङ्गणम् शशेरुपधाया इत्वम् । शिशिरं स्याद्दतोर्भेदे तुषारे शीतलेऽन्यवत् । श्रथ मोचने उपधाया इत्वं रेफलोपः । प्रत्ययरेफश्च लत्वम् । शिथिलम् । स्थास्फाय्योष्टिलोपः । स्थिरं निश्चलम् । स्फिरं प्रभूतम् । तिष्ठतेर्वुक् ह्रस्वत्वं च । स्थविरः । खदिरः । बाहुलकात् शीङो बुक् ह्रस्वत्वं च । शिबिरम् ।

**1-54 सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकिभूभ्य इलच् ॥** सलति गच्छति निम्नमिति सलिलम् । कलिलः । अनिलः । महिला । पृषोदरादित्वान्महेलापि । भड इति सौत्रो धातुः । भडिलौ शूरसेवकौ । भण्डिलो दूतः कल्याणं च । शण्डिलो मुनिः । पिण्डिलो गणकः । तुण्डिलो मुखरः । कोकिलः । भविलो भव्यः । बाहुलकात्कुटिलः ।

**1-55 कमेः पश्च ॥** कपिलः ।

**1-56 गुपादिभ्यः कित् ॥** गुपिलो राजा । तिजिलो निशाकरः । गुहिलं वनम् ।

**1-57 मिथिलादयश्च ॥** मथ्यन्तेऽत्र रिपवो मिथिला नगरी । पथिलः । पथिकः ।

**1-58 पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥** पतेरः पक्षी गन्ता च । छठेरः कृच्छ्रजीवी । कुठेरः पर्णाशः । बाहुलकान्नुम्न । गडेरो मेघः । गुडेरो गुडकः । दंशेरो हिंस्रः ।

**1-59 कुम्बेर्नलोपश्च ॥** कुबेरः ।

**1-60 शदेस्त च ॥** शतेरः शत्रुः ।

**1-61 मूलेरादयः ॥** एरगन्ता निपात्यन्ते । मूलेरो जटा । गुधेरो गोप्ता । गुहेरो लोहघातकः । मुहेरो मूर्खः ।

**1-62 कबेरोतच् पश्च ॥** कपोतः पक्षी ।

**1-63 भातेर्डवतुः ॥** भातीति भवान् ।

**1-64 कठिचकिभ्यामोरन् ॥** कठोरः । चकोरः ।

**1-65 किशोरादयश्च ॥** किंपूर्वस्य शृणातेष्टिलोपः किमोऽन्त्यलोपः किशोरोऽश्वशावः । सहोरः साधुः ।

**1-66 कपिगडिगण्डिकटिपटिभ्य ओलच् ॥** कपीति निर्देशान्नलोपः । कपोलः । गडोलगण्डोलौ गुडकपर्यायौ । कटोलः कटुः । पटोलः ।

**1-67 मीनातेरूरन् ॥** मयूरः ।

**1-68 स्यन्देः संप्रसारणं च ॥** सिन्दूरम् ।

**1-69 सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥** सिनोतीति सेतुः । '7-2-9 तितुत्र-' इति नेट् । तन्तुः । गन्तुः । मस्तु दधिमण्डम् । सच्यत इति सक्तुः । अर्धर्चादिः । '6-4-20 ज्वरत्वर-' इत्यूठ् । तत्र क्ङितीत्यनुवर्तते इति मते तु बाहुलकात् । ओतुर्बिडालः । धातुः क्रोष्टा ।

**1-70 पः किच्च ॥** पिबतीति पितुर्वह्नौ दिवाकरे ।

**1-71 अर्तेश्च तुः ॥** अर्तेस्तुः स्यात्स च कित् । ऋतुः स्त्रीपुष्पकालयोः ।

**1-72 कमिमनिजनिगाभायाहिभ्यश्च ॥** एभ्यस्तुः स्यात् । कन्तुः कन्दर्पचित्तयोः । मन्तुरपराधः । जन्तुः प्राणी । गातुः पुंस्कोकिले भृङ्गे गन्धर्वे गायनेऽपि च । भानुरादित्यः । यातुरध्वगकालयोः । रक्षसि क्लीबे । हेतुः कारणम् ।

**1-73 चायः किः ॥** केतुर्ग्रहपताकयोः ।

**1-74 आप्नोतेर्ह्रस्वश्च ॥** अप्तुः शरीरम् ।

**1-75 वसेस्तुन् ॥** वस्तु ।

**1-76 अगारे णिच्च ॥** वेश्मभूर्वास्तुरस्त्रियाम् ।

**1-77 कृञः कतुः ॥** क्रतुर्यज्ञः ।

**1-78 एधिवह्योश्च तुः ॥** एधतुः पुरुषः । वहतुरनड्वान् ।

**1-79 जीवेरातुः ॥** जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे ।

**1-80 आतृकन् वृद्धिश्च ॥** जीवेरित्येव । जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृषीवले ।

**1-81 कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः ॥** कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता । चमूः । तनूः । धनूः शस्त्रम् । सर्ज सर्जने । सर्जूर्वणिक् । खर्ज व्यथने । खर्जूः पामा ।

**1-82 मृजेर्गुणश्च ॥** मर्जूः शुद्धिकृत् ।

**1-83 वहो धश्च ॥** वधूर्जायास्नुषास्त्रीषु ।

**1-84 कषेश्छश्च ॥** कच्छूः पामा ।

**1-85 णित्कसिपद्यर्तेः ॥** कासूः शक्तिः । पादूश्चरणधारिणी । आरूः पिङ्गलः ।

**1-86 अणो डश्च ॥** आडूर्जलप्लवद्रव्यम् ।

**1-87 नञि लम्बेर्नलोपश्च ॥** तुम्ब्यलाबूरुभे समे इत्यमरः ।

**1-88 के श्र एरङ् चास्य ॥** कशब्दे उपपदे शृणातेरूः स्यादेरङ् आदेशः । कशेरूस्तृणकन्दे स्त्री । बाहुलकादुप्रत्यये कशेरुः क्लीबे पुंसि च ।

**1-89 त्रो दुट् च ॥** तरतेरूः स्यात्तस्य दुट् । तर्दूः स्याद्दारुहस्तकः ।

**1-90 दरिद्रातेर्यालोपश्च ॥** इश्च आश्च यौ तयोर्लोपः । दर्द्रूः कुष्ठप्रभेदः ।

**1-91 नृतिशृध्योः कूः ॥** नृतूर्नर्तकः । शृधूरपानम् ।

**1-92 ऋतेरम् च ॥** ऋतिः सौत्रो धातुः । ततः कूरमागमश्च । रन्तूर्देवनदी सत्यवाक् च ।

**1-93 अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥** एते कूप्रत्ययान्ता निपात्यन्ते । अन्दूर्बन्धनम् । दृभी ग्रन्थे । निपातनान्नुम् । दृम्भूः । अनुस्वाराभावोऽपि निपातनादित्येके । दृन्भूः । जनेर्बुक् ॥ **जम्बूः । जमु अदने अस्येत्येके बाहुलकाद्ध्रस्वोऽपि । जम्बुः । कफं लाति कफेलूः श्लेष्मातकः । निपातनादेत्वम् । कर्कं दधाति कर्कन्धूर्बदरी । निपातनान्नुम् । दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः । केचित्तु अन्दूदृम्फूजम्बूकम्बू इति पठन्ति । दृम्फ उत्क्लेशे । दृम्फूः सर्पजातिः ।** कमेर्बुक् ॥ **कम्बूः परद्रव्यापहारी ।**

**1-94 मृग्रोरुतिः ॥** मरुत् । गरुत्पक्षः ।

**1-95 ग्रो मुट् च ॥** गिरतेरुतिस्तस्य च मुट् । गर्मुत्सुवर्णं तृणविशेषश्च ।

**1-96 हृषेरुलच् ॥** हर्षुलो मृगकामिनोः । बाहुलकाच्चटतेः । चटुलं शोभनम् ।

**1-97 हृसृरुहियुषिभ्य इतिः ॥** हरित्ककुभि वर्णे च तृणवाचिविशेषयोः । सरिन्नदी । रोहित् मृगविशेषस्य स्त्री । युष इति सौत्रो धातुः । ऋश्यस्य रोहित् । पुरुषस्य योषित् इति भाष्यम् ।

**1-98 ताडेर्णिलुक् च ॥** ताडयतीति तडित् ।

**1-99 शमेर्डः ॥** बाहुलकादिसंज्ञा एयादेश इट् च न । शण्ढः स्यात्पुंसि गोपतौ । शण्ढः क्लीबः ।

**1-100 कमेरठः ॥** कमठः । कमठः कच्छपे पुंसि भाण्डभेदे नपुंसकमिति मेदिनी । बाहुलकाज्जरठः ।

**1-101 रमेर्वृद्धिश्च ॥** रामठं हिङ्गु ।

**1-102 शमेः खः ॥** शङ्खः ।

**1-103 कणेष्ठः ॥** कण्ठः ।

**1-104 कलस्तृपश्च ॥** तृपतेः कलप्रत्ययः चात्तृफतेः । तृपला लता । त्रिफला तु फलत्रिके ।

**1-105 शपेर्बश्च ॥** शबलः ।

**1-106 वृषादिभ्यश्चित् ॥** वृषलः । पललम् । बाहुलकाद्गुणः । सरलः । तरलः । (ग) कमेर्बुक् ॥ **कम्बलः । मुस खण्डने । मुसलम् ।** (ग) लङ्गेर्वृद्धिश्च ॥ **लाङ्गलम् ।** (ग) कुटिकशिकौतिभ्यः प्रत्ययस्य मुट् ॥ **कुट्मलः । कुडेरपि । कुड्मलः । कश्मलम् । बाहुलकाद्गुणः । कोमलम् ।**

**1-107 मृजेष्टिलोपश्च ॥** मलम् ।

**1-108 चुपेरच्चोपधायाः ॥** चपलम् ।

**1-109 शकिशम्योर्नित् ॥** शकलम् । शमलम् ।

**1-110 छो गुक् ह्रस्वश्च ॥** छगलः । प्रज्ञादित्वाच्छागलः ।

**1-111 ञमन्ताड्डः ॥** दण्डः । रण्डा । खण्डः । भण्डः । वण्डश्छिन्नहस्तः । अण्डः । बाहुलकात्सभावः । षण्डः सङ्घातः । तालव्यादिरित्यपरे । शण्डः। गण्डः । चण्डः । पण्डः क्लीबः । पण्डा बुद्धिः ।

**1-112 क्वादिभ्यः कित् ॥** कवर्गादिभ्यो डः कित्स्यात् । कुण्डम् । काण्डम् । गुड् । गुडः । घुण भ्रमणे । घुण्डो भ्रमरः ।

**1-113 स्थाचतिमृजेरालज्वालजालीयचः ॥** तिष्ठतेरालच् । स्थालम् स्थाली । चतेर्वालच् । चत्वालः । मृजेरालीयच् । मार्जालीयो बिडालः ।

**1-114 पतिचण्डिभ्यामालञ्** ॥ पातालम् । चण्डालः । प्रज्ञादित्वादणि चाण्डालोऽपीत्येके ।

**1-115 तमिविशिबिडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन्** ॥ तमालः । विशालः । बिडालः । मृणालम् । कुलालः । कपालम् । पलालम् । पञ्चालाः ।

**1-116 पतेरङ्गच् पक्षिणि** ॥ पतङ्गः ।

**1-117 तरत्यादिभ्यश्च** ॥ तरङ्गः । लवङ्गम् ।

**1-118 विडादिभ्यः कित्** ॥ विडङ्गः । मृदङ्गः । कुरङ्गः । बाहुलकादुत्वं च ।

**1-119 सृवृञोर्वृद्धिश्च** ॥ सारङ्गः । वारङ्गः खड्गादिमुष्टिः ।

**1-120 गन् गम्यद्योः** ॥ गङ्गा । अद्गः पुरोडाशः ।

**1-121 छापूखडिभ्यः कित्** ॥ छागः । पूगः । खड्गः । बाहुलकात् षिट अनादरे गन्सत्वाभावश्च । षिड्गः तरलः । षिड्गैरगद्यत ससंभ्रममेवमेकेति माघः ।

**1-122 भृञः किन्नुट् च** ॥ भृञः गन् कित्स्यात्तस्य नुत् च । भृङ्गाः षिड्गालिधूम्याटाः ।

**1-123 शृणातेर्ह्रस्वश्च** ॥ शृङ्गम् ।

**1-124 गण् शकुनौ** ॥ नुट् चेत्यनुवर्तते । शार्ङ्गः ।

**1-125 मुदिग्रोर्गग्गौ** ॥ मुद्गः । गर्गः ।

**1-126 अण्डन्कृसृभृवृञः** ॥ करण्डः । सरण्डः पक्षी । भरण्डः स्वामी । वरण्डो मुखरोगः ।

**1-127 शृदृभसोऽदिः** ॥ शरत् । दरद्धृदयकूलयोः । भसज्जघनम् ।

**1-128 दृणातेर्दग् ह्रस्वश्च** ॥ दृषत् ।

**1-129 त्यजितनियजिभ्यो डित्** ॥ त्यद् । तद् । यद् । सर्वादयः ।

**1-130 एतेस्तुट् च** ॥ एतद् ।

**1-131 सर्तेरटिः** ॥ सरट् स्याद्वातमेघयोः । वेदभाष्ये तु याभिः कृशानुमिति मन्त्रे सरट्भ्यो मधुमक्षिकाभ्य इति व्याख्यातम् ।

**1-132 लङ्घेर्नलोपश्च** ॥ लघट् वायुः ।

**1-133 पारयतेरजिः** ॥ पारक् सुवर्णम् ।

**1-134 प्रथः कित्संप्रसारणं च** ॥ पृथक् । स्वरादिपाठादव्ययत्वम् ।

**1-135 भियः षुक् ह्रस्वश्च** ॥ भिषक् ।

**1-136 युष्यसिभ्यां मदिक्** ॥ युष् सौत्रो धातुः । युष्मद् । अस्मद् । त्वम् । अहम् ।

**1-137 अर्तिस्तुसुहुसृधृभिक्षुभायावापदियक्षिनीभ्यो मन्** ॥ एभ्यश्चतुर्दशभ्यो मन् । अर्मश्चक्षूरोगः । स्तोमः सङ्घातः । सोमः । होमः । सर्मो गमनम् । धर्मः क्षेमं कुशलम् । क्षोमम् । प्रज्ञाद्यणि क्षौमं च । भाम आदित्यः । यामः । वामः शोभनदुष्टयोः । पद्मम् । यक्ष पूजायाम् । यक्ष्मो रोगराजः । नेमः ।

**1-138 जहातेः सन्वदालोपश्च** ॥ जिह्मः कुटिलमन्दयोः ।

**1-139 अवतेष्टिलोपश्च** ॥ मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः । अन्यथा डिदित्येव ब्रूयात् । '6-4-20 ज्वरत्वर-' इति ऊठौ । तयोर्दीर्घे कृते गुणः । चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न । तेषामसत्त्वार्थत्वात् । वस्तुतस्तु स्वरादिपाठादव्ययत्वम् । अवतीति ओम् ।

**1-140 ग्रसेरा च** ॥ ग्रामः ।

**1-141 अविसिविसिशुषिभ्यः कित्** ॥ ऊमं नगरम् । स्यूमो रश्मिः । सिमः सर्वः । शुष्ममग्निसमीपयोः ।

**1-142 इषियुधीन्धिदसिश्याधूसूभ्यो मक्** ॥ इष्मः कामवसन्तयोः । ईषीति पाठे दीर्घादिः । युध्मः शरो योद्धा च । इध्मः समित् । दस्मो यजमानः । श्यामः धूमः । सूमोऽन्तरिक्षम् । बाहुलकादीर्मं व्रणः ।

**1-143 युजिरुचितिजां कुश्च** ॥ युग्मम् । रुक्मम् । तिग्मम् ।

**1-144 हन्तेर्हि च** ॥ हिमम् ।

**1-145 भियः षुग्वा** ॥ भीमः । भीष्मः ।

**1-146 घर्मः ॥** घृधातोर्मग्गुणश्च निपात्यते ।

**1-147 ग्रीष्मः ॥** ग्रसतेर्निपातोऽयम् ।

**1-148 प्रथेः षिवन् संप्रसारणं च ॥** पृथिवी । पवन्नित्येके । पृथवी पृथिवी पृथ्वी इति शब्दार्णवः ।

**1-149 अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन् ॥** अश्वः । प्रुष स्नेहनादौ । प्रुष्वः स्याद्दतुसूर्ययोः । प्रुष्वा जलकणिका । लट्वा पक्षिभेदः फलं च । कण्वं पापम् । बाहुलकादित्वे किण्वमपि । खट्वा । विश्वम् ।

**1-150 इण्शीभ्यां वण् ॥** एवो गन्ता । ये च एवा मरुतः । असत्वे निपातोऽयम् । शेवं मित्राय वरुणाय ।

**1-151 सर्वनीघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अस्वतन्त्रे ॥** अकर्तर्येते निपात्यन्ते । सृतमनेन विश्वमिति सर्वम् । निपूर्वाद्घृषेर्गुणाभावोऽपि । निघृष्यतेऽनेन निघृष्वः खुरः । रिष्वो हिंस्रः । लष्वो नर्तकः । लिष्व इत्यन्ये । तत्रोपधाया इत्वमपि । शेतेऽस्मिन् सर्वमिति शिवः शम्भुः । शीङो ह्रस्वत्वम् । पट्वो रथो भूलोकश्च । प्रहूयते इति प्रह्वः । ह्वेञ आकारवकारलोपः । जहातेरालोपो वा । ईषेर्वन् । ईष्व आचार्यः । इष्व इत्यन्ये । अस्वतन्त्रे किम् । सर्ता सारकः । बाहुलकाद् ह्रसतेः ह्रस्वः ।

**1-152 शेवयह्वजिह्वाग्रीवाप्वामीवाः ॥** शेव इत्यन्तोदात्तार्थम् । यान्त्यनेन वह्वः । ह्रस्वो हुगागमश्च । लिहन्त्यनया जिह्वा । लकारस्य जः गुणाभावश्च । गिरन्त्यनया ग्रीवा । ईडागमश्च । अप्नोतीत्याप्वा वायुः । मीवा उदरकृमिः । वायुरित्यन्ये ।

**1-153 कॄगॄशॄदॄभ्यो वः ॥** कर्वः काम आखुश्च । गर्वः । शर्वः । दर्वो राक्षसः ।

**1-154 कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः ॥** यौतीति युवा । वृषा इन्द्रः । तक्षा । राजा । धन्वा मरुः । धन्व शरासनम् । द्युवा सूर्यः । प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः ।

**1-155 सप्यशूभ्यां तुट् च ॥** सप्त । अष्ट ।

**1-156 नञि जहातेः ॥** अहः ।

**1-157 श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्जन्मातरिश्वन्मघवन्निति ॥ एते त्रयोदश कनिप्रत्ययान्ता निपात्यन्ते । श्वयतीति श्वा । उक्षा पूषा । प्लिह गतौ । इकारस्य दीर्घत्वम् । प्लेहतीति प्लीहा कुक्षिव्याधिः । क्लिदू आर्द्रीभावे । क्लिद्यति क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते । मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् अर्यमा । विश्वं प्साति विश्वप्साग्निः । परिजायते परिज्मा चन्द्रोऽग्निश्च । जनेरुपधालोपो मश्चान्तादेशः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । मह पूजायाम् । हस्य घो वुगागमश्च मघवा इन्द्रः ॥**

**इत्युणादिषु प्रथमः पादः ॥**

# द्वितीयः पादः

**2-1 कृहृभ्यामेणुः ॥** करेणुः । हरेणुर्गन्धद्रव्यम् ।

**2-2 हनिकुषिनरिकाशिभ्यः क्थन् ॥** हथो विषण्णः । कुष्ठः । नीथो नेता । रथः काष्ठम् ।

**2-3 अवे भृञः ॥** अवभृथः ।

**2-4 उषिकुषिगार्तिभ्यः स्थन् ॥** ओष्ठः कोष्ठम् । गाथा अर्थः । बाहुलकात् शोथः ।

**2-5 सर्तेर्णित् ॥** सार्थः समूहः ।

**2-6 जॄवृञ्भ्यामूथन् ॥** जरूथं मांसम् । वरूथो रथगुप्तौ ना ।

**2-7 पातॄतुदिवचिरिचिसिचिभ्यस्तक् ॥** पीथो रविर्घृतं पीथम् । तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भःस्त्रीरजःसु च विश्रुतमिति विश्वः । तुत्थोऽग्निः । उक्थं सामभेदः । रिक्थम् । बाहुलकाद्दचेरपि । रिक्थमृक्थं धनं वसु । सिक्थम् ।

**2-8 अर्तेर्निरि ॥** निर्ऋथं साम ।

**2-9 निशीथगोपीथावगथाः ॥** निशीथोऽर्धरात्रः रात्रिमात्रं च । गोपीथं तीर्थम् । अवगथः प्रातःस्नातः ।

**2-10 गश्चोदि ॥** उद्गीथः साम्नो भागविशेषः ।

**2-11 समीणः ॥** समिथो वह्निः संग्रामश्च ।

**2-12 तिथपृष्ठगूथयूथप्रोथाः ॥** तिजेर्जलोपः । तिथोऽनलः कामश्च । पृष्ठम् । गूथं विष्ठा । यूथं समूहः । प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते ।

**2-13 स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्** ॥ द्वात्रिंशद्भ्यो रक् स्यात् । वलि यलोपः । स्फारम् । न्यङ्क्वादित्वात्कुत्वम् । तक्रम् । वक्रम् । शक्रः । क्षिप्रम् । क्षुद्रः । सृप्रश्चन्द्रः । तृप्रः पुरोडाशः । दृप्रो बलवान् । वन्द्रः पूजकः । उन्दी, उन्द्रो जलचरः । श्वित्रं कुष्ठम् । वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे । अजेर्वी, वीरः । नीरम् । पद्रो ग्रामः । मन्द्रो हर्षो देशभेदश्च । मुद्रा प्रत्ययकारिणी । खिद्रो रोगो दरिद्रश्च । छिद्रम् । भिद्रं वज्रम् । मन्द्रः । चन्द्रः । पचाद्यचि चन्दोऽपि । हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः । दहोऽग्निः । दस्रः स्वर्वैद्यः । दम्भ्रः समुद्रः स्वल्पं च । वसेः संप्रसारणे ।

**8-3-110 न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम् ॥ रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात् । '8-3-106 पूर्वपदात्' इति प्राप्तः प्रतिषिध्यत इति वृत्तिर्भूयोऽभिप्राया । तेन '8-3-60 शासिवसि-' इति प्राप्तमपि न । उस्रो रश्मिः । उस्रा गौः । वाश्रो दिवसः । वाश्रं मन्दिरम् । शीरोऽजगरः । हस्रो मूर्खः । सिध्रः साधुः । शुभ्रम् । बाहुलकात् मुसेरक्** ॥ मुस्रम् । अश्रुः ।

**2-14 चकिरम्योरुच्चोपधायाः** ॥ चुक्रमम्लद्रव्यम् । रुम्रोऽरुणः ।

**2-15 वौ कसेः** ॥ विकुस्रश्चन्द्रः ।

**2-16 अमितम्योर्दीर्घश्च** ॥ आम्रम् । ताम्रम् ।

**2-17 निन्देर्नलोपश्च** ॥ निद्रा ।

**2-18 अर्देर्दीर्घश्च** ॥ आर्द्रम् ।

**2-19 शुचेर्दश्च** ॥ शूद्रः ।

**2-20 दुरीणो लोपश्च** ॥ दुःखेनेयते प्राप्यत इति दूरम् ।

**2-21 कृतेश्छः क्रू च** ॥ कृच्छ्रम् । क्रूरः ।

**2-22 रोदेर्णिलुक् च** ॥ रोदयतीति रुद्रः ।

**2-23 बहुलमन्यत्रापि संज्ञाछन्दसोः** ॥ णिलुगित्येव । वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ।

**2-24 जोरी च** ॥ जीरोऽणुः । ज्यश्चेत्येके ।

**2-25 सुसूधागृधिभ्यः क्रन्** ॥ सुरः । सूरः । धीरः । गृध्रः ।

**2-26 शुसिचिमीनां दीर्घश्च** ॥ शुः सौत्रः । शूरः । सीरम् । चीरम् । भीरः समुद्रः ।

**2-27 वा विन्धेः** ॥ वीध्रं विमलम् ।

**2-28 वृधिवपिभ्यां रन्** ॥ वर्ध्रं चर्म । वप्रः प्राकारः ।

**2-29 ऋज्रेन्द्राग्रवज्रविप्रकुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेलशुक्रशुक्लगौरवम्रेरामालाः** ॥ रन्नन्ता ऊनविंशतिः । निपातनाद्गुणाभावः । ऋज्रो नायकः । इदि इन्द्रः । अङ्गेर्नलोपः । अग्रम् । वज्रोऽस्त्री हीरके पवौ । डुवप् उपधाया इत्वम् विप्रः । कुम्बिचुम्ब्योर्नलोपः । कुब्रमरण्यम् । चुब्रं मुखम् । क्षुर विलेखने रेफलोपः । अगुणः । क्षुरः । खुर छेदने रलोपो गुणाभावश्च । खुरः । भन्देर्नलोपः भद्रम् । उच समवाये । चस्य गः । उग्रः । ञिभी । भेरी । पक्षे लः । भेलो जलतरणद्रव्यम् । शुचेश्चस्य कः । शुक्रः । पक्षे लः । शुक्लः । गुङ् वृद्धिः । गौरोऽरुणे सिते पीते । वन संभक्तौ । वम्रो विभागी इणो गुणाभावः । इरा मद्ये च वारिणि । मा माने माला ।

**2-30 समि कस उकन्** ॥ कस गतौ । सम्यक्कसन्ति पलायन्ते जना अस्मादिति सङ्कसुको दुर्जनः अस्थिरश्च ।

**2-31 पचिनशोर्णुकन् कनुमौ च** ॥ पचेः कः । पाकुकः सूपकारः । नशेर्नुम् । नंशुकः ।

**2-32 भियः क्रुकन्** ॥ भीरुकः ।

**2-33 क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि** ॥ रजकः । इक्षुकुट्टकः । चरकः । चष भक्षणे । चषकः । शुनकः । भषकः ।

**2-34 रमे रश्च लो वा** ॥ रमको विलासी । लमकः ।

**2-35 जहातेर्द्वे च** ॥ जहकस्त्यागी कालश्च ।

**2-36 ध्मो धम च** ॥ धमकः कर्मकारः ।

**2-37 हनो वध च** ॥ वधकः ।

**2-38 बहुलमन्यत्रापि** ॥ कुह विस्मापने । कुहकः । कृतकम् ।

**2-39 कृषेर्वृद्धिश्चोदीचाम्** ॥ कार्षकः । कृषकः ।

**2-40 उदकं च ॥** प्रपञ्चार्थम् ।

**2-41 वृश्चिकृष्योः किकन् ॥** वृश्चिकः । कृषिकः ।

**2-42 प्राङिपणिकषः ॥** प्रापणिकः पण्यविक्रयी । प्राकषिकः परदारोपजीवी ।

**2-43 मुषेर्दीर्घश्च ॥** मूषिक आखुः ।

**2-44 स्यमेः संप्रसारणं च ॥** चाद्दीर्घः । सीमिको वृक्षभेदः ।

**2-45 क्रिय इकन् ॥** क्रयिकः क्रेता ।

**2-46 आङि पणिपनिपतिखनिभ्यः ॥** आपणिकः । आपनिकः इन्द्रनीलः किरातश्च । आपतिकः श्येनो दैवायत्तश्च । आखनिको मूषिको वराहश्च ।

**2-47 श्यास्त्याहृत्रविभ्य इनच् ॥** श्येनः । स्त्येनः । हरिणः । अविनोऽध्वर्युः ।

**2-48 वृजेः किच्च ॥** वृजिनम् ।

**2-49 अजेरज च ॥** वीभावबाधनार्थम् । अजिनम् ।

**2-50 बहुलमन्यत्रापि ॥** कठिनम् । नलिनम् । मलिनम् । कुण्डिनम् । द्यतेः यत्परुषि दिनम् । दिवसोऽपि दिनम् ।

**2-51 द्रुदक्षिभ्यामिनन् ॥** द्रविणम् । दक्षिणः । दक्षिणा ।

**2-52 अर्तेः किदिच्च ॥** इरिणं शून्यम् ।

**2-53 वेपितुह्योर्ह्रस्वश्च ॥** विपिनम् । तुहिनम् ।

**2-54 तलिपुलिभ्यां च ॥** तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु । पुलिनम् ।

**2-55 गर्वेरत उच्च ॥** गौरादित्वात् ङीष् । गुर्विणी । गर्भिणी ।

**2-56 रुहेश्च ॥** रोहिणः ।

**2-57 महेरिनण् च ॥** चादिनन् । माहिनन् । महिनं राज्यम् ।

**2-58 क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसंप्रसारणं च ॥** वाक् । प्राट् । श्रीः । स्रवत्यतो घृतादिकमिति सूर्यज्ञोपकरणम् । द्रूर्हिरण्यम् । कटप्रूः कामरूपी कीटश्च । जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम् ।

**2-59 आप्नोतेर्ह्रस्वश्च ॥** आपः । अपः । अद्भिः । अद्भ्यः ।

**2-60 परौ व्रजेः षश्च पदान्ते ॥** व्रजेः क्विब्दीर्घौ स्तः पदान्ते तु षश्च । परिव्राट् । परिव्राजौ ।

**2-61 हुवः श्लुवच्च ॥** जुहूः ।

**2-62 स्रुवः कः ॥** स्रुवः ।

**2-63 चिक् च ॥** इकार उच्चारणार्थः । क इत् कुत्वम् । स्रुवं च स्रुचश्च संमृड्ढि ।

**2-64 तनोतेरनश्च वः ॥** तनोतेश्चिक् प्रत्ययः । अनो वशब्दादेशश्च । त्वक् ।

**2-65 ग्लानुदिभ्यां डौः ॥** ग्लौः । नौः ।

**2-66 च्विरव्ययम् ॥** डौरित्येव । ग्लौकरोति । '1-1-39 कृन्मेजन्तः' इति सिद्धे नियमार्थमिदम् । उणादिप्रत्ययान्तश्च्व्यन्त एवेति ।

**2-67 रातेर्डैः ॥** राः । रायौ । रायः ।

**2-68 गमेर्डोः ॥** गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः । स्त्री तु स्याद्दिशि भारत्यां भूमौ च सुरभावपि । नृस्त्रियोः स्वर्गवज्राम्बुरश्मिदृग्बाणलोमसु । बाहुलकाद् द्युतेरपि डोः । द्यौः स्त्री स्वर्गान्तरिक्षयोः ।

**2-69 भ्रमेश्च डूः ॥** भ्रूः । चाद्गमेः । अग्रेगूः ।

**2-70 । दमेर्डोसिः ॥** दोः । दोषौ ।

**2-71 पणेरिज्यादेश्च वः ॥** वणिक् । स्वार्थेऽण् । नैगमो वाणिजो वणिक् ।

**2-72 वशेः कित् ॥** उशिगग्नौ घृतेपि च ।

**2-73 भृञ ऊच्च** ॥ भूरिक् भूमिः ।

**2-74 जसिसहोरुरिन्** ॥ जसुरिर्व्रज्रम् । सहुरिरादित्यः पृथिवी च ।

**2-75 सुयुरुवृञो युच्** ॥ सवश्चन्द्रमाः । यवनः । रवणः । कोकिलः । वरणः ।

**2-76 अशेरश च** ॥ अश्नोतेर्युच् स्यात् रशादेशश्च । रशना काञ्ची । जिह्वावाची तु दन्त्यसकारवान् ।

**2-77 उन्देर्नलोपश्च** ॥ ओदनः ।

**2-78 गमेर्गश्च** ॥ गमेर्युच् स्याद्गश्चादेशः । गगनम् ।

**2-79 बहुलमन्यत्रापि** ॥ युच् स्यात् । स्यन्दनः । रोचना ।

**2-80 रञ्जेः क्युन्** ॥ रजनम् ।

**2-81 भूसूधूभ्रस्जिभ्यश्छन्दसि** ॥ भुवनम् । सुवन आदित्यः । धवनो वह्निः । निधुवनं सुरतम् । भृज्जनमम्बरीषम् ।

**2-82 कृपृवृजिमन्दिनिधाञः क्युः** ॥ किरणः । पुरणः समुद्रः । वृजनमन्तरिक्षम् । मन्दनं स्तोत्रम् । निधनम् ।

**2-83 धृषेर्धिष् च संज्ञायाम्** ॥ धिषणो गुरुः । धिषणा धीः ।

**2-84 वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च** ॥ अतिप्रत्ययान्ताः । पृषु सेचने गुणाभावः पृषन्ति । बृहत् महान् । गमेर्जगादेशः । जगत् ।

**2-85 संश्चत्तृपद्वेहत्** ॥ एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । संचिनोतेः सुट् इकारलोपः । संश्चत् कुहकः । तृषत् छत्रम् । विपूर्वाद्धन्तेष्टिलोपः । इत ए च । वेहद्गर्भोपघातिनी ।

**2-86 छन्दस्यसानच् शुजृभ्याम्** ॥ शवसानः पन्थाः । जरसानः पुरुषः ।

**2-87 ऋञ्जिवृद्धिमन्दिसहिभ्यः कित्** ॥ ऋञ्जसानो मेघः । वृधसानः पुरुषः । मन्दसानोऽग्निर्जीवश्च । सहसानो यज्ञो मयूरश्च ।

**2-88 अर्तेर्गुणः शुट् च** ॥ अर्शसानोऽग्निः ।

**2-89 सम्यानच्स्तुवः** ॥ संस्तवानो वाग्मी ।

**2-90 युधिबुधिदृशिभ्यः किच्च** ॥ युधानः । बुधानः । दृशानो लोकपालकः ।

**2-91 हुर्छेः सनो लुक् छलोपश्च** ॥ जुहुराणश्चन्द्रमाः ।

**2-92 श्वितेर्दश्च** ॥ शिश्विदानः पुण्यकर्मा ।

**2-93 तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ** ॥ शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः तौ चानिटौ । शंस्ता स्तोता । शंस्तरौ । शंस्तरः । क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च । अनुदात्तेत् । वृक्ये चक्षदानमिति मन्त्रात् । उक्षाणं वा वेहतं वा क्षदन्ते इति ब्राहमणाच्च । क्षत्ता स्यात्सारथौ द्वाःस्थे क्षत्रियायां च शूद्रजे ।

**2-94 बहुलमन्यत्रापि** ॥ मन् । मन्ता । हन् । हन्ता । इत्यादि ।

**2-95 नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ** ॥ न पतन्त्यनेन नप्ता पौत्रो दौहित्रश्च । नयतेः पुग्गुणश्च । नेष्टा । त्विषेरितोऽत्वम् । त्वष्टा । होता । पोता ऋत्विग्भेदः । भ्राजतेर्जलोपः । भ्राता । जायां माति जामाता । मान पूजायां नलोपः । माता । पातेराकारस्य इत्वम् । पिता । दुहेस्तृच इट् गुणाभावश्च । दुहिता ।

**2-96 सुञ्यसेर्ऋन्** ॥ स्वसा ।

**2-97 यतेर्वृद्धिश्च** ॥ याता । भार्यास्तु भ्रातृवर्गस्य यातरः स्युः परस्परम् ।

**2-98 नञि च नन्देः** ॥ न नन्दति ननान्दा । इह वृद्धिर्नानुवर्तत इत्येके ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सेति शब्दार्णवः ।

**2-99 दिवेर्ऋः** ॥ देवा देवरः । स्वामिनो देवृ देवरौ ।

**2-100 नयतेर्डिच्च** ॥ ना । नरौ नरः ।

**2-101 सव्ये स्थश्छन्दसि** ॥ '8-3-97 अम्बाम्ब-' इत्यत्र 'स्थास्थिन्स्थूणामुपसंख्यानम्' । सव्येष्टा सारथिः । सव्येष्टरौ । सव्येष्टरः ।

**2-102 अर्तिसृधृधम्यश्यवितृभ्योऽनिः** ॥ सरणिः । धरणिः । धमनिः । अमनिर्गतिः । अशनिः । अवनिः । तरणिः । बाहुलकात् रजनिः ।

**2-103 आङि शुषेः सनश्छन्दसि** ॥ आशुशुक्षणिरग्निर्वातश्च ।

**2-104 कृषेरादेश्च चः ॥** चर्षणिर्जनः ।

**2-105 अदेर्मुट् च ॥** अद्मनिरग्निः ।

**2-106 वृतेश्च ॥** वर्तनिः । गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह ।

**2-107 क्षिपेः किच्च ॥** क्षिपणिरायुधम् ।

**2-108 अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ॥** अर्चिर्ज्वाला । इदन्तोऽप्ययम् । अग्नेर्भ्राजन्ते अर्चयः । शोचिर्दीप्तिः । हविः सर्पिः । '6-4-97 इस्मन्-' इति ह्रस्वः । छदिः पटलम् । छर्दिर्वमनव्याधिः । इदन्तोऽपि । छर्द्यतीसारशूलवान् ।

**2-109 बृंहेर्नलोपश्च ॥** बर्हिर्ना कुशशुष्मणोः ।

**2-110 द्युतेरिसिन्नादेश्च जः ॥** ज्योतिः ।

**2-111 वसौ रुचेः संज्ञायाम् ॥** वसुरोचिर्यज्ञः ।

**2-112 भुवः कित् ॥** भुविः समुद्रः ।

**2-113 सहो धश्च ॥** सिधिरनड्वान् ।

**2-114 पिबतेस्थुक् ॥** पाथिश्चक्षुःसमुद्रयोः ।

**2-115 जनेरुसिः ॥** जनुर्जननम् ।

**2-116 मनेर्धश्छन्दसि ॥** मधुः ।

**2-117 अर्तिपॄवपियजितनिधनितपिभ्यो नित् ॥** अरुः । परुर्ग्रन्थिः । वपुः । यजुः । तनुः । तनुषी । तनूंषि । धनुरस्त्रियाम् । धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति । सान्तस्य उदन्तस्य वा रूपम् । तपुः सूर्याग्निशत्रुषु ।

**2-118 एतेर्णिच्च ॥** आयुः । आयुषी ।

**2-119 चक्षेः शिच्च ॥** चक्षुः ।

**2-120 मुहेः किच्च ॥** मुहुरव्ययम् ।

**2-121बहुलमन्यत्रापि ॥** आचक्षुः । परिचक्षुः ।

**2-122 कॄगॄशॄवृञ्चतिभ्यः ष्वरच् ॥** कर्वरो व्याघ्ररक्षसोः । गर्वरोऽहंकारी । शर्वरी रात्रिः । वर्वरः प्राकृतो जनः । चत्वरम् ।

**2-123 नौ सदेः ॥ निपद्वरस्तु जम्बालः । निपद्वरी रात्रिः ॥**

**इत्युणादिषु द्वितीयः पादः ॥**

## तृतीयः पादः

**3-1 छित्वरछत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ॥** एकादश ष्वरच्प्रत्ययान्ता निपात्यन्ते । छिदिर् छद् अनयोस्तकारोऽन्तादेशः छिदेर्गुणाभावश्च । छित्वरो धूर्तः । छत्वरो गृहकुञ्जयोः । धीवरः कैवर्तः । पीवरः स्थूलः । मीवरो हिंसकाः । चिनोतेर्दीर्घश्च । चीवरं भिक्षुकप्रावरणं । तीवरो जातिविशेषः । नीवरः परिव्राट् । गाहतेर्ह्रस्वत्वम् । गह्वरम् । कटे वर्षादौ । कट्वरं व्यजनम् । यमेर्दकारः । संयद्वरो नृपः । पदेः संपद्वरः इत्येके ।

**3-2 इण्सिञ्जिदीङुष्यविभ्यो नक् ॥** इनः सूर्ये नृपे पत्यौ । सिनः काणः । जिनोऽर्हन् । दीनः । उष्णः । ऊनः ।

**3-3 फेनमीनौ ॥** एतौ निपात्येते । स्फायतेः फेनः । मीनः ।

**3-4 कृषेर्वर्णे ॥** कृष्णः ।

**3-5 बन्धेर्ब्रधिबुधी च ॥** ब्रध्नः । बुध्नः ।

**3-6 धापॄवस्यज्यतिभ्यो नः ॥** धाना भ्रष्टयवे स्त्रियः । पर्णं पत्रम् । पर्णः किंशुकः । वस्नो मूल्ये वेतने च । अजेर्वी । वेनः । अत्न आदित्यः । बाहुलकात् । शृणोतेः श्रोणः पङ्गुः ।

**3-7 लक्षेरट् च ॥** लक्षेश्चुरादिण्यन्तान्नः स्यात्तस्याडागमश्च । चान्मुडित्येके । लक्षणं लक्ष्मणं नाम्नि चिन्हे च । लक्षणो लक्ष्मणश्च रामभ्राता । लक्षणा हंसयोषायां सारसस्य च लक्ष्मणा ।

**3-8 वनेरिच्चोपधायाः ॥** वेन्ना नदी ।

**3-9 सिवेष्ठेर्यू च ॥** दीर्घोच्चारणसामर्थ्यान्न गुणः । स्यून आदित्यः । बाहुलकात् केवलो नः । ऊठ् । अन्तरङ्गत्वाद्यण् । गुणः । स्योनः ।

**3-10 कृवृजृसिद्रुपन्यनिस्वपिभ्यो नित् ॥** कर्णः । वर्णः । जर्णश्चन्द्रे च वृक्षे च । सेना । द्रोणः । पन्नो नीचैर्गतिः । अन्नमोदनः । स्वप्नो निद्रा ।

**3-11 धेट इच्च ॥** धेनः सिन्धुर्नदी धेना ।

**3-12 तृषिशुषिरसिभ्यः कित् ॥** तृष्णा । शुष्णः सूर्यो वह्निश्च । रस्नं द्रव्यम् ।

**3-13 सुञो दीर्घश्च ॥** सूना वधस्थानम् ।

**3-14 रमेस्त च ॥** रमयतीति रत्नम् ।

**3-15 रास्नासास्नास्थूणावीणाः ॥** रास्ना गन्धद्रव्यम् । सास्ना गोगलकम्बलः । स्थूणा गृहस्तम्भः । वीणा वल्लकी ।

**3-16 गादाभ्यामिष्णुच् ॥** गेष्णुर्गायनः । देष्णुर्दाता ।

**3-17 कृत्यशूभ्यां क्स्नः ॥** कृत्स्नम् । अक्ष्णमखण्डम् ।

**3-18 तिजेर्दीर्घश्च ॥** तीक्ष्णम् ।

**3-19 श्लिषेरच्चोपधायाः ॥** श्लक्ष्णम् ।

**3-20 यजिमनिशुन्धिदसिजनिभ्यो युच् ॥** यज्युरध्वर्युः। मन्युर्दैन्ये क्रतौ क्रुधि । शुन्ध्युरग्निः । दस्युस्तस्करः । जन्युः शरीरी ।

**3-21 भुजिमृङ्भ्याम् युक्त्युकौ ॥** भुज्युर्भाजनम् । मृत्युः ।

**3-22 सर्तेरयुः ॥** सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ।

**3-23 पानीविषिभ्यः पः ॥** पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात्पापः । नेपः पुरोहितः । बाहुलकाद्गुणाभावे नीपो वृक्षविशेषः । वेष्पः पानीयम् ।

**3-24 च्युवः किच्च ॥** च्युपो वक्त्रम् ।

**3-25 स्तुवो दीर्घश्च ॥** स्तूपः समुच्छ्रायः ।

**3-26 सुशृभ्यां निच्च ॥** चात्कित् । सूपः । बाहुलकादूत्वम् । शूर्पम् ।

**3-27 कुयुभ्यां च ॥** कुवन्ति मन्ण्डूका अस्मिन् कूपः । युवन्ति बध्नन्त्यस्मिन्पशुमिति यूपो यज्ञस्थम्भः ।

**3-28 खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥** सप्तैते पप्रत्ययान्ता निपात्यन्ते । खनतेर्नकारस्य पत्वम् । खष्पौ क्रोधबलात्कारौ शीलतेर्ह्रस्वः । शिल्पं कौशलम् । शसु हिंसायाम् निपातनात्पत्वम् । शष्पं बालतृणं प्रतिभाक्षयश्च । बधतेः पः । बाष्पो नेत्रजलोष्मणोः । बाष्पं च । रौतेर्दीर्घ । रूपं स्वभावे सौन्दैर्ये । पृ । पर्पं गृहं बालतृणं पङ्गुपीठं च । तल प्रतिष्ठाकरणे चुरादिणिचो लुक् । तल्पं शय्याट्टदारेषु ।

**3-29 स्तनिहृषिपुपिगदिमदिभ्यो णेरित्नुच् ॥** 'अयामन्त-२३११' इति णेरयादेशः । स्तनयित्नुः । हर्षयित्नुः । पोपयित्नुः गदयित्नुर्वावदूकः । मदयित्नुर्मदिरा ।

**3-30 कृहनिभ्यां क्त्नुः ॥** कृत्नुः शिल्पीः । हत्नुर्व्याधिः शस्त्रं च ।

**3-31 गमेः सन्वच्च ॥** जिगत्नुः ।

**3-32 दाभाभ्यां नुः ॥** दानुर्दता । भानुः ।

**3-33 वचेर्गश्च ॥** वग्नुः ।

**3-34 धेट इच्च ॥** धयति सुतानिति धेनुः ।

**3-35 सुवः कित् ॥** सूनुः पुत्रेऽनुजे रवौ ।

**3-36 जहातेर्द्वेऽन्तलोपश्च ॥** जह्नुः ।

**3-37 स्थो णुः ॥** स्थाणुः कीले स्थिरे हरे ।

**3-38 अजिवृरीभ्यो निच्च ॥** अजेर्वी । वेणुः । वर्णुर्नददेशभेदयोः । रेणुर्द्वयोः स्त्रियां धूलिः ।

**3-39 विषेः किच्च ॥** विष्णुः ।

**3-40 कृदाधारार्चिकलिभ्यः कः ॥** बाहुलकान्न कस्येत्संज्ञा । कर्को धवलघोटकः । दाको दाता । धाकोऽनड्वानाधारश्च । राका पौर्णमासी अर्कः । कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि ।

**3-41 सृवृभूशुषिमुषिभ्यः कक्** ॥ सृक उत्पलवातयोः । वृकः श्वापदकाकयोः । भूकं छिद्रम् । शुष्कः । मुष्कोऽण्डम् ।

**3-42 शुकवल्कोल्काः** ॥ शुभेरन्त्यलीपः । शुकः । वल्कं वल्कलमस्त्रियाम् । उष दाहे । षस्य लः । उल्का ।

**3-43 इण्भीकापाशल्यतिमर्चिभ्यः कन्** ॥ एके मुख्यान्यकेवलाः । भेको मण्डूकमेषयोरिति विश्वभेदिन्यौ । काकः । पाकः शिशुः । शल्कं शकलम् । अत्कः पथिकः शरीरावयवश्च । मर्कः शरीरवायुः ।

**3-44 नौ हः** ॥ जहातेः कन् स्यान्नो । निहाका गोधिका ।

**3-45 नौ सदेर्डिच्च** ॥ निष्कोऽस्त्री हेम्नि तत्पले ।

**3-46 स्यमेरीट् च** ॥ स्यमीको वल्मिकः वृक्षभेदश्च । इट्ह्रस्व इति केचित् । स्यमिकः ।

**3-47 अजियुधुनीभ्यो दीर्घश्च** ॥ वीकः स्याद्वातपक्षिणोः । यूका । धूको वायुः । नीको वृक्षविशेषः ।

**3-48 ह्रियो रश्च लो वा** ॥ ह्रीका ह्लीका त्रपा मता ।

**3-49 शकेरुनोन्तोन्त्युनयः** ॥ उन उन्त उन्ति उनि एते चत्वारः स्युः । शकुनः । शकुन्तः । शकुन्तिः । शकुनिः ।

**3-50 भुवो झिच्** ॥ भवन्तिर्वर्तमानकालः । बहुलकादवेश्च । अवन्तिः । वदेर्वदन्तिः । किंवदन्ती जनश्रुतिः ।

**3-51 कन्युच्क्षिपेश्च** ॥ चाद्भुवः । क्षिपण्युर्वसन्त इत्युज्ज्वलदत्तः । भवन्युः स्वामिसूर्ययोः ।

**3-52 अनुङ्नदेश्च** ॥ चात्क्षिपेः । नदनुर्मेघः । क्षिपणुर्वातः ।

**3-53 कृवृदारिभ्य उनन्** ॥ करुणो वृक्षभेदः स्यात्करुणा च कृपा मता । वरुणः । दारुणम् ।

**3-54 त्रो रश्च लो वा** ॥ तरुणस्तलुनो युवा ।

**3-55 क्षुधिपिशिमिथिभ्यः कित्** ॥ क्षुधुनो म्लेच्छजातिः । पिशुनः । मिथुनम् ।

**3-56 फलेर्गुक् च** ॥ फल्गुनः पार्थः । प्रज्ञाद्यण् । फाल्गुनः ।

**3-57 अशेर्लशश्च** ॥ लशुनम् ।

**3-58 अर्जेर्णिलुक् च** ॥ अर्जुनः ।

**3-59 तृणाख्यायां चित्** ॥ चित्त्वादन्तोदात्तः । अर्जुनं तृणम् ।

**3-60 अर्तेश्च** ॥ अरुणः ।

**3-61 अजियमिशीङ्भ्यश्च** ॥ वयुनं देवमन्दिरम् । यमुना । शयुनोऽजगरः ।

**3-62 वृतॄवदिहनिकमिकशिभ्यः सः** ॥ वर्सः । तर्सः प्लवसमुद्रयोः । वत्सः । वत्सम् । वक्षः । हंसः । कंसोऽस्त्री पानभाजनम् । कक्षं नक्षत्रम् ।

**3-63 प्लुषेरच्चोपधायाः** ॥ प्लक्षः ।

**3-64 मनेर्दीर्घश्च** ॥ मांसम् ।

**3-65 अशेर्देवने** ॥ अक्षः ।

**3-66 स्नुव्रश्चिकृत्यृषिभ्यः कित्** ॥ स्नुषा । वृक्षः । कुत्समुदकम् । ऋक्षं नक्षत्रम् ।

**3-67 ऋषेर्जातौ** ॥ ऋक्षोऽद्रिभेदे भल्लूके इति च ।

**3-68 उन्दिगुधिकुषिभ्यश्च** ॥ उत्सः प्रस्रवणम् । गुत्सः स्तबकः । उक्षो जठरम् ।

**3-69 गृधिपण्योर्दकौ च** ॥ गुत्सः कामदेवः । पक्षः ।

**3-70 अशेः सरः** ॥ अक्षरम् ।

**3-71 वसेश्च** ॥ वत्सरः ।

**3-72 सपूर्वाच्चित्** ॥ संवत्सरः ।

**3-73 कृधूमधिभ्यः कित्** ॥ बाहुलकान्न षत्वम् । कृसरः स्यात्तिलौदनम् । धूसरः । मत्सरः । मत्सरा मक्षिका ज्ञेया भम्भराली च सा मता ।

**3-74 पते रश्च लः ॥** पत्सलः पन्थाः ।

**3-75 तन्यृषिभ्यां क्सरन् ॥** तसरः सूत्रवेष्टने । ऋक्षरः ऋत्विक् ।

**3-76 पीयुक्कणिभ्यां कालन् ह्रस्वः संप्रसारणं च ॥** पीयुः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ।

**3-77 कटिकुषिभ्यां ॥** कटाकुः पक्षी । कुषाकुरग्निः सूर्यश्च ।

**3-78 सर्तेर्दुक् च ॥** सृदाकुर्वातसरितोः ।

**3-79 वृतेर्वृद्धिश्च ॥** वार्ताकुः । बाहुलकादुकारस्य अत्वम् । वार्ताकम् ।

**3-80 पर्देर्नित्संप्रसारणमल्लोपश्च ॥** पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे ।

**3-81 सृयुवचिभ्योऽन्युजागूजक्नुचः ॥** अन्युच् आगूच् अक्नुच् एते क्रमात्स्युः सरण्युर्मेघवातयोः । यवागूः । वचक्नुर्विप्रवाग्मिनोः ।

**3-82 आनकः शीङ्भियः ॥** शयानकोऽजगरः । भयानकः ।

**3-83 आणको लुधुशिघिधाञ्भ्यः ॥** लवाणकं दात्रम् । धवानको वातः । शिङ्घाणकः श्लेष्मा । पृषोदरादित्वात्पक्षे कलोपः । शिङ्घाणं नासिकामले । धाणको दीनारभागः ।

**3-84 उल्मुकदर्विहोमिनः ॥** उष दाहे । षस्य लः मुकप्रत्ययश्च । उल्मुकं ज्वलदङ्गारम् । दृणातेर्विः । दर्विः । जुहोतेर्मिनिः । होमी ।

**3-85 ह्रियः कुक् रश्च लो वा ॥** ह्राकुः । ह्लीकुर्लज्जावान् ।

**3-86 हसिमृग्रिण्वाऽमिदमिलूपूधुर्विभ्यस्तन् ॥** दशभ्यस्तन् स्यात् । '7-2-9 तितुत्र -' इति नेट् । हस्तः । मर्तः । गर्तः । एतः कुर्बरः । वातः । दन्तः । अन्तः । लोतः स्यादश्रुचिह्नयोः । पोतो बालवहित्रयोः । धूर्तः । बाहुलकात्तु सेर्दीर्घश्च । तूस्तं पापं । धूलिर्जटा च ।

**3-87 नञ्याप इट् च ॥** नापितः ।

**3-88 तनिमृङ्भ्यां किच्च ॥** ततम् । मृतम् ।

**3-89 अञ्जिघृसिभ्यः क्तः ॥** अक्तम् । घृतम् । सितम् ।

**3-90 दुतनिभ्यां दीर्घश्च ॥** दूतः । तातः ।

**3-91 जेर्मुट् चोदात्तः ॥** जीमूतः ।

**3-92 लोष्टपलितौ ॥** लुनातेः क्तः तस्य सुट् धातोर्गुणः । लोष्टम् । पलितम् ।

**3-93 ह्रश्याभ्यामितन् ॥** हरितश्येतौ वर्णभेदौ ।

**3-94 रुहे रश्च लो वा ॥** रोहितो मृगमत्स्ययोः । लोहितं रक्तम् ।

**3-95 पिशेः किच्च ॥** पिशितं मांसम् ।

**3-96 श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥** श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुडो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ।

**3-97 दिधिषाय्यः ॥** दधातेर्द्वित्वमित्वं षुक् च । मित्र इव यो दिधिषाय्यः ।

**3-98 वृञ एण्यः ॥** वरेण्यः ।

**3-99 स्तुवः क्सेय्यश्छन्दसि ॥** स्तुषेय्यं पुरुवर्पसम् ।

**3-100 राजेरन्यः ॥** राजन्यो वह्निः ।

**3-101 शॄरम्योश्च ॥** शरण्यम् । रमण्यम् ।

**3-102 अर्तेर्निच्च ॥** अरण्यम् ।

**3-103 पर्जन्यः ॥** पृषु सेचने । षस्य जः । पर्जन्यः शक्रमेघयोः ।

**3-104 वदेरान्यः ॥** वदान्यस्त्यागिवाग्मिनोः ।

**3-105 अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥** अमत्रं भाजनम् । नक्षत्रम् । यजत्रः । वधत्रमायुधम् । पतत्रं च तनूरुहम् ।

**3-106 गडेरादेश्च कः ॥** कडत्रम् । डलयोरेकत्वस्मरणात् कलत्रम् ।

**3-107 वृत्रश्चित् ॥** वरत्रा चर्ममयी रज्जुः ।

**3-108 सुविदेः कत्रः ॥** सुविदत्रं कुटुम्बकम् ।

**3-109 कृतेर्नुम् च ॥** कृन्तत्रं लाङ्गलम् ।

**3-110 भृमृदृशियजिपर्विपच्यमितमिनमिहर्येभ्योऽतच् ॥** दशभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । दर्शतः सोमसूर्ययोः । यजतः ऋत्विक् । पर्वतः पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतोऽश्वः ।

**3-111 पृषिरञ्जिभ्यां कित् ॥** पृषतो मृगो बिन्दुश्च । रजतम् ।

**3-112 खलतिः ॥** खलतेः सलोपः अतच्प्रत्ययान्तस्य इत्वं च । खलतिर्निष्केशशिराः ।

**3-113 शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥** सप्तभ्योऽथः स्यात् । शयथोऽजगरः । शपथः । रवथः कोकिलः । गमथः पथिकः पन्थाश्च । वञ्चथो धूर्तः । वन्दीति पाठे वन्द्यते वा वन्दथः स्तोता स्तुत्यश्च । जीवथ आयुष्मान् । प्राणथो बलवान् । बाहुलकाच्छमिदमिभ्याम् । शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः ।

**3-114 भृत्रश्चित् ॥** भरथो लोकपालः ।

**3-115 रुदिविदिभ्यां ङित् ॥** रोदितीति रुदथः शिशुः । वेत्तीति विदथः ।

**3-116 उपसर्गे वसेः ॥** आवसथो गृहम् । संवसथो ग्रामः ।

**3-117 अत्यविचमितमिरभिलभिनभितपिपतिपनिपणिमहिभ्योऽसच् ॥** त्रयोदशभ्योऽसच् स्यात् । अततीत्यतसो वायुरात्मा च । अवतीत्यवसो राजा भानुश्च । चमत्यस्मिन् चमसः सोमपानपात्रम् । ताम्यत्यस्मिन् तमसोऽन्धकारः । नमसः अनुकूलः । रभसो वेगहर्षयोः । लभसो धनं याचकश्च । नभति नभ्यति वा नभस आकाशः । तपसः पक्षी चन्द्रश्च । पतसः पक्षी । पनसः कन्टकिफलः । पणसः पण्यद्रव्यम् । महसं ज्ञानम् ।

**3-118 वेत्रस्तुट् च ॥** बाहुलकादात्वाभावः । वेतसः ।

**3-119 वहियुभ्यां णित् ॥** वाहसोऽजगरः । यावसस्तृणसङ्घातः ।

**3-120 वयश्च ॥** वय गतौ । वायसः काकः ।

**3-121 दिवः कित् ॥** दिवसम् । दिवसः ।

**3-122 कृशृशलिकलिगर्दिभ्योऽभच् ॥** करभः । शरभः । शलभः । कलभः । गर्दभः ।

**3-123 ऋषिवृषिभ्यां कित् ॥** ऋषभः । वृषभः ।

**3-124 रुषेर्निलुष् च ॥** रुष हिंसायाम् । अस्मादभच् नित्कित्स्यात लुषादेशश्च । लुषभो मत्तदन्तिनि ।

**3-125 रासिवल्लिभ्यां च ॥** रासभः । वल्लभः ।

**3-126 जृविशिभ्यां झच् ॥** जरन्तो महिषः । वेशन्तः पल्वलम् ।

**3-127 रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥** रोहन्तो वृक्षभेदः । नन्दन्तः पुत्रः । जीवन्त औषधम् । प्राणन्तो वायुः । षित्वान्ङीष् । रोहन्ती ।

**3-128 तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥** दशभ्यो झच् स्यात्स च षित् । तरन्तः समुद्रः । तरन्ती नौक । भवन्तः कालः । वहन्तो वायुः । वसन्तः ऋतुः । भासन्तः सूर्यः । साधन्तो भिक्षुः । गडेर्घटादित्वान्मित्त्वं ह्रस्वः । '6-4-55 अयामन्ता-' इति णेरयः । गण्डयन्तो जलदः । मण्डयन्तो भूषणम् । जयन्तः शक्रपुत्रः । नन्दयन्तो नन्दकः ।

**3-129 हन्तेर्मुट् हि च ॥** हेमन्तः ।

**3-130 भन्देर्नलोपश्च ॥** भदन्तः प्रव्रजितः ।

**3-131 ऋच्छेररः ॥** ऋच्छरा वेश्या । बाहुलकाज्जर्जरझर्झरादयः ।

**3-132 अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ॥** षड्भ्योऽरश्चित् स्यात् । अररं कपाटम् । कमरः कामुकः । भ्रमरः । चमरः । देवरः । वासरः ।

**3-133 कुवः क्ररन् ॥** कुररः पक्षिभेदः ।

**3-134 अङ्गिमदिमन्दिभ्य आरन् ॥** अङ्गारः । मदारो वराहः । मन्दारः ।

**3-135 गडेः कड च ॥** कडारः ।

**3-136 शृङ्गारभृङ्गारौ ॥** शृभृञ्भ्यामारन्नुम् गुक् ह्रस्वश्च । शृङ्गारो रसः । भृङ्गारः कनकालुका ।

**3-137 कञ्जिमृजिभ्यां चित् ॥** कञ्जिः सौत्रो धातुः । कञ्जारो मयूरः । मार्जारः ।

**3-138 कमेः किदुच्चोपधायाः ॥** चिदित्यनुवृत्तेरन्तोदात्तः । कुमारः ।

**3-139 तुषारादयश्च ॥** तुषारः । कासारः । सहार आम्रभेदः ।

**3-140 दीङो नुट् च ॥** दीनारः सुवर्णाभरणम् ।

**3-141 सर्तेरपः षुक् च ॥** सर्षपः ।

**3-142 उषिकुटिदलिकचिखजिभ्यः कपन् ॥** उषपो वह्निसूर्ययोः । कुटपो मानभाण्डम् । दलपः प्रहरणम् । कचपं शाकपत्रम् । खजपं घृतम् ।

**3-143 क्वणेः संप्रसारणं च ॥** कुणपम् ।

**3-144 कपश्चाक्रवर्मणस्य ॥** स्वरे भेदः ।

**3-145 विटपपिष्टपविशिपोलपाः ॥** चत्वारोऽमी कपन् प्रत्ययान्ताः । विट शब्दे । विटपः । विशतेरादेः पः । प्रत्ययस्य तुट् । षत्वम् । पिष्टपं भुवनम् । विशतेः प्रत्ययादेरित्वम् । विशिपं मन्दिरम् । वलतेः संप्रसारणम् । उलपं कोमलं तृणम् ।

**3-146 वृतेस्तिकन् ॥** वर्तिका ।

**3-147 कृतिभिदिलतिभ्यः कित् ॥** कृत्तिका भित्तिका भित्तिः । लत्तिका गोधा ।

**3-148 इष्यशिभ्यां तकन् ॥** इष्टका । अष्टका ।

**3-149 इणस्तशन्तशसुनौ ॥** एतशो ब्राह्मणः । स एव एतशाः ।

**3-150 वीपतिभ्यां तनन् ॥** वी गत्यादौ । वेतनम् । पत्तनम् ।

**3-151 दृदलिभ्यां भः ॥** दर्भः । 'दल्भः स्याद्दृषिचक्रयोः' ।

**3-152 अर्तिगृभ्यां भन् ॥** अर्भः । गर्भः ।

**3-153 इणः कित् ॥** इभः ।

**3-154 असिसञ्जिभ्यां क्थिन् ॥** अस्थि । सक्थि ।

**3-155 प्लुषिकुषिशुषिभ्यः । क्सिः ॥** प्लुक्षिर्वह्निः । कुक्षिः । शुक्षिर्वातः ।

**3-156 अशेर्नित् ॥** अक्षि ।

**3-157 इषेः क्सुः ॥** इक्षुः ।

**3-158 अवितॄस्तृतन्त्रिभ्यः ईः ॥** अवीर्नारी रजस्वला । तरीर्नौः । स्तरीर्धूमः । तन्त्रीर्वीणादेर्गुणः ।

**3-159 यापोः किद्द्वे च ॥** ययीरश्वः । पपीः स्यात्सोमसूर्ययोः ।

**3-160 लक्षेर्मुट् च ॥ लक्ष्मीः ॥**

**इत्युणादिषु तृतीयः पादः ॥**

## चतुर्थः पादः

**4-1 वातप्रमीः ॥ वातशब्दे उपपदे माधातोरीप्रत्ययः स च कित् । वातप्रमीः ॥** अयं स्त्रीपुंसयोः ।

**4-2 ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निच्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ॥** द्वादशभ्यः क्रमात्स्युः । अर्तेः कत्निच् यण् । बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः । तनोतेर्यतुच् । तन्यतुर्वायू रात्रिश्च अञ्जेरलिच् । अञ्जलिः । वनेरिष्टुच् । वनिष्टु स्थविरान्त्रम् । अञ्जेरिष्टुच् । अञ्जिष्ठो भानुः । अर्पयतेरिसन् । अर्पिसोऽग्रमांसम् । मदेः स्यन् । मत्स्यः । अतेरिथिन् । अतिथिः । अङ्गेरुलिः । अङ्गुलिः । कौतेरसः । कवसः । अच इत्येके । कवचम् । यौतेरासः । यवासो दुरालभा । कृशेरानुक् । कृशानुः ।

**4-3 श्रः करन् ॥** उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्वम् । शर्करा ।

**4-4 पुषः कित् ॥** पुष्करम् ।

**4-5 कलश्च ॥** पुष्कलम् ।

**4-6 गमेरिनिः ॥** गमिष्यतीति गमी ।

**4-7 आङि णित् ॥** आगामी ।

**4-8 भुवश्च ॥** भावी ।

**4-9 प्रे स्थः ॥** प्रस्थायी ।

**4-10 परमे कित् ॥** परमेष्ठी ।

**4-11 मन्थः ॥** मन्थतेरिनिः कित्स्यात् । कित्त्वान्नकारलोपः मन्थाः । मन्थानौ । मन्थानः ।

**4-12 पतः स्थ च ॥** पन्थाः । पन्थानौ ।

**4-13 खजेराकः ॥** खजाकः पक्षी ।

**4-14 बलाकादयश्च ॥** बलाका । शलाका । पताका ।

**4-15 पिनाकादयश्च ॥** पातेरित्वम् नुम् च । क्लीबपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः । तड आघाते । तडाकः ।

**4-16 कषिदूषिभ्यामीकन् ॥** कषिका पक्षिजातिः । दूषिका नेत्रयोर्मलम् ।

**4-17 अनिहृषिभ्याम् किच्च ॥** अनीकम् । हृषीकम् ।

**4-18 चङ्कणः कङ्कणश्च ॥** कण शब्दे । अस्माद्यङ्लुगन्तादीकन् धातोः कङ्कणादेशश्च । घन्टिकायां कङ्कणीका सैव प्रतिसरापि च ।

**4-19 शॄपॄवृञां द्वेरुक् चाभ्यासश्च ॥** शर्करीको हिंस्रः । पर्परीको दिवाकरः । वर्वरीकः कुटिलकेशः ।

**4-20 पर्फरीकादयश्च ॥** स्फुर स्फुरणे अस्मादीकन् धातोः पर्फरादेशः । पर्फरीकं किसलयम् । दर्दरीकं वादित्रम् । झर्झरीकं शरीरम् । तित्तिडीको वृषभेदः (ग) चरेर्नु च । चञ्चरीको भ्रमरः । मर्मरीको हीनजनः । कर्करीका गलन्तिका । पुणतेः । पुन्डरीकं वादित्रम् । पुन्डरीको व्याघ्रोऽग्निर्दिग्गजश्च ।

**4-21 ईषः किद्ध्रस्वश्च ॥** इषीका शलाका ।

**4-22 ऋजेश्च ॥** ऋजिकः उपहतः ।

**4-23 सर्तेर्नुम् च ॥** सृणिका लाला ।

**4-24 मृडः कीकच्कङ्कणौ ॥** मृडीको मृगः । मृडङ्कणः शिशुः ।

**4-25 अलीकादयश्च ॥** कीकजन्ता निपात्यन्ते । अल भूषणादौ । अलीकं मिथ्या । विपूर्वाद्व्यलीकं विप्रियं खेदश्च । वलीकं पटलप्रान्ते इत्यादि ।

**4-26 कॄतॄभ्यामीषन् ॥** करीषोऽस्त्री शुष्कगोमये । करीषः तरीता ।

**4-27 शॄपॄभ्यां किच्च ॥** शिरीषः । पुरीषम् ।

**4-28 अर्जेर्ऋज च ॥** ऋजीषं पिष्टपचनम् ।

**4-29 अम्बरीषः ॥** अयं निपात्यते । अबि शब्दे । अम्बरीषः पुमान् भाष्ट्रम् ।

**4-30 कृशॄपॄकटिपटिशौटिभ्य ईरन् ॥** करीरो वंशाङ्कुरः । शरीरम् । परीरम् । फलम् । कटीरः कन्दरो जघनप्रदेशश्च । पटीरश्चन्दनः कन्टकः कामश्च । शौटीरस्त्यागिवीरयोः ब्राह्मणादित्वात् ष्यञ् । शौटीर्यम् ।

**4-31 वशेः कित् ॥** वशीरम् ।

**4-32 कशेर्मुट् च ॥** काश्मीरो देशः ।

**4-33 कृञ उच्च ॥** कुरीरं मैथुनम् ।

**4-34 घसेः किश्च ॥** क्षीरम् ।

**4-35 गभीरगम्भीरौ ॥** गभेर्भः पक्षे नुम् च ।

**4-36 विषा विहा ॥** स्यतेर्जहातेश्च विपूर्वाभ्यामाप्रत्ययः । विषा बुद्धिः । विहा स्वर्गः । अव्यये इमे ।

**4-37 पच एलिमच् ॥** पचेलिमो वह्निरव्योः ।

**4-38 शीङो धुक्लक्वलञ्वालनः ॥** चत्वारः प्रत्ययाः स्युः । शीधु मद्यम् । शीलं स्वभावः । शैवलः शेवालम् । बाहुलकाद्वस्य पोऽपि । शेवालं शैवलो न स्त्री शेपालो जलनीलिका ।

**4-39 मृकणिभ्यामूकोकणौ ॥** मरूको मृगः । काणूकः काकः ।

**4-40 वलेरूकः ॥** वलूकः पक्षी उत्पलमूलं च ।

**4-41 उलूकादयश्च ॥** वलेः संप्रसारणमूकश्च । उलूकाविन्द्रपेचकौ । वावदूको वक्ता । भल्लूकः । (ग) शमेर्वुक्च ॥ **शम्बूको जलशुक्तिः ।**

**4-42 शलिमन्डिभ्यामूकण् ॥** शालूकं कन्दविशेषः । मण्डूकः ।

**4-43 नियो मिः ॥** नेमिः ।

**4-44 अर्तेरूच्च ॥** ऊर्मिः ।

**4-45 भुवः कित् ॥** भूमिः ।

**4-46 अश्नोते रश् च ॥** रश्मिः किरणो रज्जुश्च ।

**4-47 दल्मिः ॥** दल विशरणे । दल्मिरिन्द्रायुधम् ।

**4-48 वीज्याज्यरिभ्यो निः ॥** बाहुलकाण्णत्वम् । वेणिः स्यात्केशविन्यासः प्रवेणी च स्त्रियामुभे । ज्यानिः । जूर्णिः ।

**4-49 सृवृषिभ्यां कित् ॥** सृणिरङ्कुशः । वृष्णिः क्षत्रियमेषयोः ।

**4-50 अङ्गेर्नलोपश्च ॥** अग्निः ।

**4-51 वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥** वह्निः । श्रेणिः । श्रोणिः । योनिः । द्रोणिः । ग्लानिः । हानिः । तूर्णिः । बाहुलकान्म्लानिः ।

**4-52 घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥** एते पञ्च निपात्यन्ते । घृणिः किरणः । स्पृशतेः सलोपः पृश्निरल्पशरीरः । पृषेर्वृद्धिश्च । पार्ष्णिः पादतलम् । चरेरुपधाया उत्वम् । चूर्णिः कपर्दकशतम् । बिभर्तेरुत्वम् । भूर्णिर्धरणी ।

**4-53 वृदृभ्यां विन् ॥** वर्विर्घस्मरः । दर्विः ।

**4-54 जृशृस्तृजागृभ्यः क्विन् ॥** जीर्विः पर्शुः । शीर्विर्हिंस्रः । स्तीर्विरध्वर्युः । जागृविर्नृपः ।

**4-55 दिवो द्वे दीर्घश्चाभ्यासस्य ॥** दीदिविः स्वर्गमोक्षयोः ।

**4-56 कृविघृष्विछविस्थविकिकीदिवि ॥** कृविस्तन्तुवायद्रव्यम् । घृष्विर्वराहः । छास्थोर्ह्रस्वत्वं च । छविर्दीप्तिः । स्थविस्तन्तुवायः । दीव्यतेः किकीपूर्वात् किकीदिविश्चाषः । बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः । चाषेण किकीदीविना ।

**4-57 पातेर्डतिः ॥** पतिः ।

**4-58 शकेर्ऋतिन् ॥** शकृत् ।

**4-59 अमेरतिः ॥** अमतिः कालः ।

**4-60 वहिवस्यर्तिभ्यश्चित् ॥** वहतिः पवनः । वसतिर्गृहयामिन्योः । अरतिः क्रोधः ।

**4-61 अञ्चेः को वा ॥** अङ्कतिः । अञ्चतिर्वातः ।

**4-62 हन्तेरंह च ॥** हन्तेरतिः स्यादंहादेशश्च धातोः । हन्ति दुरितमनया अंहतिर्दानम् प्रादेशनं निर्वपणमपवर्जनमंहतिः ।

**4-63 रमेर्नित् ॥** रमतिः कालकामयोः ।

**4-64 सूङः क्रिः ॥** सूरिः ।

**4-65 अदिशदिभूशुभिभ्यः क्रिन् ॥** अद्रिः । शद्रिः । शर्करा । भूरि प्रचुरम् । शुभ्रिर्ब्रह्मा ।

**4-66 वङ्क्र्यादयश्च ॥** क्रिन्नन्ता निपात्यन्ते । वङ्क्रिर्वाद्यभेदो गृहदारु पार्श्वास्थि च । वप्रिः क्षेत्रम् । अंह्रिरङ्घ्रिश्च चरणः । तदिः सौत्रो धातुः । तन्द्रिर्मोहः बाहुलकाद्गुणः । भेरिः ।

**4-67 राशदिभ्यां त्रिप् ॥** रात्रिः शन्त्रिः । कुञ्जरः ।

**4-68 अदेस्त्रिनिश्च ॥** चात्त्रिप् । अन्त्री । अन्त्रिणौ । अन्त्रिणः । अन्त्रिः । अन्त्री । अन्त्रयः ।

**4-69 पतेरत्रिन्** ॥ पतत्रिः पक्षी ।

**4-70 मृकणिभ्यामीचिः** ॥ मरीचिः कणीचिः पल्लवो निनादश्च ।

**4-71 श्वयतेश्चित्** ॥ श्वयीचिर्व्याधिः ।

**4-72 वेञो डिच्च** ॥ वीचिस्तरङ्गः । नञ्समासे अवीचिर्नरकभेदः ।

**4-73 ऋहनिभ्यामूषन्** ॥ अरूषः सूर्यः । हनूषो राक्षसः ।

**4-74 पुरः कुषन्** ॥ पुर अग्रगमने । पुरुषः । '6-3-137 अन्येषामपि –' इति दीर्घः । पूरुषः ।

**4-75 पॄनहिकलिभ्य उषच्** ॥ परुषम् । नहुषः । कलुषम् ।

**4-76 पीयेरूषन्** ॥ पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद्गुणे पेयूषोऽभिनवं पयः ।

**4-77 मस्जेर्नुम् च** ॥ मञ्जूषा ।

**4-78 गडेश्च** ॥ गण्डूषः । गण्डूषा ।

**4-79 अर्तेररुः** ॥ अररुः शत्रुः । अररू । अररवः ।

**4-80 कुटः किच्च** ॥ कुटरुर्वस्त्रगृहम् । कित्वप्रयोजनं चिन्त्यम् ।

**4-81 शकादिभ्योऽटन्** ॥ शकटोऽस्त्रियाम् । शकिर्गत्यर्थः । कङ्कटः सन्नाहः । देवटः शिल्पी । करट इत्यादि ।

**4-82 कृकदिकडिकटिभ्योऽम्बच्** ॥ करम्बं व्यामिश्रम् । कदिकडी सौत्रौ । कदम्बो वृक्षभेदः । कडम्बोऽग्रभागः । कटम्बो वादित्रम् ।

**4-83 कदेर्णित्पक्षिणि** ॥ कादम्बः कलहंसः ।

**4-84 कलिकर्द्योरमः** ॥ कलमः । कर्दमः ।

**4-85 कुणिपुल्योः किन्दच्** ॥ कुण शब्दोपकरणयोः । कुणिन्दः शब्दः । पुलिन्दो जातिविशेषः ।

**4-86 कुपेर्वा वश्च** ॥ कुपिन्दकुविन्दौ तन्तुवाये ।

**4-87 नौ षञ्जेर्घथिन्** ॥ निषङ्गथिरालिङ्गकः ।

**4-88 उद्यर्तेश्चित्** ॥ उदरथिः समुद्रः ।

**4-89 सर्तेर्णिच्च** ॥ सारथिः ।

**4-90 खर्जिपिञ्जादिभ्य ऊरोलचौ ॥ खर्जूरः । कर्पूरः । वल्लूरं शुष्कमांसम् । पिञ्जूलं कुशवर्तिः । लङ्गेर्वृद्धिश्च** ॥ लाङ्गूलम् । कुसूलः । तमेर्बुग्वृद्धिश्च । ताम्बूलम् । शृणातेर्दुग्वृद्धिश्च । शार्दूलः । दुक्वोः कुक्च । दुकूलम् । कुकूलम् ।

**4-91 कुवश्चट् दीर्घश्च** ॥ कूची चित्रलेखनिका ।

**4-92 समीणः** ॥ समीचः समुद्रः । समीची हरिणी ।

**4-93 सिवेष्टेरू च** ॥ सूचो दर्भाङ्कुरः । सूची ।

**4-94 शमेर्बन्** ॥ शम्बो मुसलम् ।

**4-95 उल्बादयश्च** ॥ बन्नन्ता निपात्यन्ते । उच समवाये । चस्य लत्वं गुणाभावश्च । उल्बो गर्भाशयः । शुल्बं ताम्रम् । बिम्बम् ।

**4-96 स्थः स्तोऽम्बजबकौ** ॥ तिष्ठतेरम्बच् अबक एतौ स्तस्तादेशश्च । स्तम्बो गुच्छस्तृणादिनः । स्तबकः पुष्पगुच्छः ।

**4-97 शाशपिभ्यां ददनौ** ॥ शादो जम्बालशष्पयोः ।

**4-98 अब्दादयश्च** ॥ शब्दः । अवतीत्यशब्दः । (ग) कौतेर्नुम् ॥ **कुन्दः ।**

**4-99 वलिमलितनिभ्यः कयन्** ॥ वलयम् । मलयः । तनयः ।

**4-100 वृह्वोः षुग्दुकौ च** ॥ वृषयः आश्रयः । हृदयम् ।

**4-101 मिपीभ्यां रुः** ॥ मेरुः । पेरुः सूर्यः । बाहुलकात् पिबतेरपि । संवत्सरवपुः पारुः पेरुर्वासीर्दिनप्रणीः ।

**4-102 जत्र्वादयश्च ॥** जत्रु जत्रुणी । अश्रु । अश्रुणी ।

**4-103 रुशातिभ्यां क्रुन् ॥** रुरुर्मृगभेदः । शातयतीति शत्रुः । प्रज्ञादौ पाठाद्ध्रस्वत्वम् ।

**4-104 जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्त्वन्त्नण्क्निन्शक्स्यढडटाटचः ॥** जनित्वौ मातापितरौ । दात्वो दाता । च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च । सृणिरङ्कुरशश्चन्द्रः सूर्यो वायुश्च । वृशः आर्द्रकं मूलकं च । मत्स्यः । षण्ढः । डित्वाट्टिलोपः । नमतीति नटः शैलूषः । बिभर्ति भरटः कुलालो भृतकश्च ।

**4-105 अन्येभ्योऽपि दृश्यन्ते ॥** पेत्वममृतम् भृशम् ।

**4-106 कुसेरुम्भोमेदेताः ॥** कुसुम्भम् । कुसुमम् । कुसीदम् । कुसितो जनपदः ।

**4-107 सानसिवर्णसिपणसितण्डुलाङ्कुशचषालेल्वलपल्वलधिष्ण्यशल्याः ॥** सनोतेरसिप्रत्यय उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पृ पर्णसिर्जलग्रहणम् । तड आघाते तण्डुलाः । अकि लक्षणे उशच् । अङ्कुशः । चषेरालच् । चषालो यूपकटकः । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा । ऋकारश्च इकारः । धिष्ण्यम् । शलेर्यः शल्यम् । वा पुंसि शल्यं शङ्कुर्ना ।

**4-108 मूशक्यबिभ्यः क्लः ॥** मूलम् । शक्लः प्रियंवदे । अम्ब्लो रसः । बाहुलकादमेः । अम्लः ।

**4-109 माछाससिभ्यो यः ॥** माया । छाया । सस्यम् । बाहुलकात्सुनोतेः । सव्यं दक्षिणवामयोः ।

**4-110 जनेर्यक् ॥** '6-4-43 ये विभाषा' । जन्यं युद्धम् । जाया भार्या ।

**4-111 अघ्न्यादयश्च ॥** यगन्ता निपात्यन्ते । हन्तेर्युक् अडागम उपधालोपश्च । अघ्न्या माहेयी । अघ्न्यः प्रजापतिः । कनी दीप्तौ । कन्या । बवयोरैक्यम् । वन्ध्याः ।

**4-112 स्नामदिपद्यर्तिपृशकिभ्यो वनिप् ॥** स्नावा रसिकः । मद्वा शिवः । पद्वा पन्थाः । अर्वा तुरङ्गगगर्ह्ययोः । पर्वा ग्रन्थिः प्रस्तावश्च । शक्वा हस्ती । ङीब्रौ । शक्वरी अङ्गुलिः ।

**4-113 शीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥** शीवा अजगरः । क्रुश्वा सृगालः । रुह्वा वृक्षः । जित्वा जेता । क्षित्वा वायुः । सृत्वा प्रजापतिः । धृत्वा विष्णुः ।

**4-114 ध्याप्योः संप्रसारणं च ॥** धीवा कर्मकरः । पीवा स्थूलः ।

**4-115 अदेर्ध च ॥** अध्वा ।

**4-116 प्र ईरशदोस्तुट् च ॥** प्रेत्वा प्रशत्वा च सागरः । प्रेत्वरी प्रशत्वरी च नदी ।

**4-117 सर्वधातुभ्य इन् ॥** पचिरग्निः । तुडिः । तुण्डिः । वलिः । वटिः । यजिः । देवयजिः । काशत इति काशिः । यतिः । मल्लिः । केलिः । मसी परिणामे । मसिः । बाहुलकाद्गुणः । कोटिः । हेलिः । बोधिः । नन्दिः । कलिः ।

**4-118 हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ॥** हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ । चन्द्रे कीले प्लवङ्गे च यमे वाते च कीर्तितः । पेषिर्वज्रम् । रोहिर्व्रती । वर्तिः । वेदिः । छदिश्छेत्ता । कीर्तिः ।

**4-119 इगुपधात्कित् ॥** कृषिः । ऋषिः । शुचिः । लिपिः । बाहुलकाद्बत्वे लिबिः । तूल निष्कर्षे । तूलिः । तूली कूर्चिका ।

**4-120 भ्रमेः संप्रसारणं च ॥** भृमिर्वातः । बाहुलकाद्भ्रमिः ।

**4-121 क्रमितमिशतिस्तम्भामत इच्च ॥** क्रिमिः । संप्रसारणानुवृत्तेः कृमिरपि । तिमिर्मत्स्यभेदः । शितिर्मेचकशुक्लयोः । स्तिम्भिः समुद्रः ।

**4-122 मनेरुच्च ॥** मुनिः ।

**4-123 वर्णेर्बलिश्चाहिरण्ये ॥** वर्णिः सौत्रः । अस्य बलिरादेशः । करोपहारयोः पुंसि बलिः प्राण्यङ्गजे स्त्रियाम् । हिरण्ये तु वर्णिः सुवर्णम् ।

**4-124 वसिवपियजिराजिव्रजिसदिहनिनाशिवाशिवारिभ्य इञ् ॥** वासिश्छेदनवस्तुनि । वापिः । वापी । याजिर्यष्टा । राजिः । राजी । व्राजिर्वातालिः । सादिः सारथिः । निघातिर्लोहघातिनी । वाशिरग्निः । वादिर्विद्वान् । वारिर्गजबन्धनी । जले तु क्लीबम् । बाहुलकाद्वारिः पथिकसंहतौ ।

**4-125 नहो भश्च ॥** नाभिः स्यात्क्षत्रिये पुंसि । प्राण्यङ्गे तु स्त्रियाम् । पुंस्यपीति केचित् ।

**4-126 कृषेर्वृद्धिश्छन्दसि ॥** कार्षिः ।

**4-127 श्रः शकुनौ ॥** शारिः । शारिका ।

**4-128 कृञ उदीचां कारुषु ॥** कारिः शिल्पी ।

**4-129 जनिघसिभ्यामिण् ॥** जनिर्जननम् । घासिर्भक्ष्यमग्निश्च ।

**4-130 अज्यतिभ्यां च ॥** आजिः संग्रामः । आतिः पक्षी ।

**4-131 पादे च ॥** पदाजिः । पदातिः ।

**4-132 अशिपणाय्यो रुडायलुकौ च ॥** अशे रुट् । राशिः पुञ्जः । पणायतेरायलुक् । पाणिः करः ।

**4-133 वातेर्डिच्च ॥** विः पक्षी । स्त्रियां वीत्यपि ।

**4-134 प्रे हरतेः कूपे ॥** प्रहिः कूपः ।

**4-135 नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥** व्येञ इण् स्याद् यलोपश्च नेर्दीर्घः । नीविः । नीवी वस्त्रग्रन्थौ मूलधने च ।

**4-136 समाने ख्यः स चोदात्तः ॥** समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्स च डिच्च यलोपश्च समानस्य तूदात्तः स इत्यादेशश्च । समानं ख्यायते जनैरिति सखा ।

**4-137 आङि श्रिहनिभ्यां ह्रस्वश्च ॥** इण् स्यात्स च डित् आङो ह्रस्वश्च । स्त्रियः पाल्यश्रिकोटयः । सर्पे वृत्रासुरेऽप्यहिः ।

**4-138 अच इः ॥** रविः । पविः । तरिः । कविः । अरिः । अलिः ।

**4-139 खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचरिभ्यश्च ॥** खनिः । कषिर्हिंस्रः । अजिः । असिः । वसिर्वस्त्रम् । वनिरग्निः । सनिर्भक्तिर्दानं च । ध्वनिः । ग्रन्थिः । चरिः पशुः ।

**4-140 वृतेश्छन्दसि ॥** वर्तिः ।

**4-141 भुजेः किच्च ॥** भुजिः ।

**4-142 कृगॄशॄपॄकुटिभिदिछिदिभ्यश्च ॥** इः कित्स्यात् । किरिर्वराहः । गिरिर्गोत्राक्षिरोगयोः । गिरिणा काणः गिरिकाणः । शिरिः शलभो हन्ता च । पुरिर्नगरं राजा नदी च । कुटिः शाला शरीरं च । भिदिर्वज्रम् । छिदिः परशुः ।

**4-143 कुडिकम्प्योर्नलोपश्च ॥** कुडि दाहे । कुडिर्देहः । कपिः ।

**4-144 सर्वधातुभ्यो मनिन् ॥** क्रियत इति कर्म । चर्म । भस्म । जन्म । शर्म । स्थाम बलम् । '6-4-97 इस्मन्-' इति ह्रस्वः । छद्म । सुत्रामा ।

**4-145 बृंहेर्नोच्च ॥** नकारस्याकारः । ब्रह्म तत्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः ।

**4-146 अशिशकिभ्यां छन्दसि ॥** अश्मा । शक्मा ।

**4-147 हृभृधृसृस्तृशृभ्य इमनिच् ॥** हरिमा कालः । भरिमा कुटुम्बम् । धरिमा रूपम् । सरिमा वायुः । स्तरिमा तल्पम् । शरिमा प्रसवः ।

**4-148 जनिमृङ्भ्यामिमनिन् ॥** जनिमा जन्म । मरिमा मृत्युः ।

**4-149 वेञः सर्वत्र ॥** छन्दसि भाषायां चेत्यर्थः । वेमा तन्तुवायदण्डः । अर्धर्चादिः । सामनी वेमनी इति वृत्तिः ।

**4-150 नामन् सीमन् व्योमन् रोमन् लोमन् पाप्मन् ध्यामन् ॥** सप्त अमी निपात्यन्ते । म्नायतेऽनेनेति नाम । सिनोतेर्दीर्घः । सीमा सीमानौ । सीमानः । पक्षे डाप् । सीमे सीमाः । व्येञोऽन्त्यस्योत्वं गुणः । व्योम । रौतेः । रोम । लोम । पाप्मा पापम् । ध्याम परिमाणं तेजश्च ।

**4-151 मिथुने मनिः ॥** उपसर्गक्रियासंबन्धो मिथुनम् । स्वरार्थमिदम् । सुशर्मा ।

**4-152 सातिभ्यां मनिन्मनिणौ ॥** स्यति । साम । सामनी । आत्मा ।

**4-153 हनिमशिभ्यां सिकन् ॥** हंसिका हंसयोषिति । मक्षिका ।

**4-154 कोररन् ॥** कवरः ।

**4-155 गिर उडच् ॥** गरुडः ।

**4-156 इन्देः कमिन्नलोपश्च ॥** इदम् ।

**4-157 कायतेर्डिमिः ॥** किम् ।

**4-158 सर्वधातुभ्यः ष्ट्रन् ॥** वस्त्रम् । अस्त्रम् । शस्त्रम् । '6-4-97 इस्मन्-' इति ह्रस्वत्वम् । छादनाच्छत्रम् ।

**4-159 भ्रस्जिगमिनमिहनिविश्यशां वृद्धिश्च ॥** भ्राष्ट्रः । गात्रं शकटम् । नान्त्रं स्तोत्रम् । हान्त्रं मरणम् । वैष्ट्रं विष्टपम् । आष्ट्रमाकाशम् ।

**4-160 दिवेर्द्युच्च ॥** द्यौत्रम् ।

**4-161 उषिखनिभ्यां कित् ॥** उष्ट्रः । खात्रं खनित्रं जलाधारश्च ।

**4-162 सिविमुच्योष्टेरू च ॥** सूत्रम् । मूत्रम् ।

**4-163 अमिचिमिदिशसिभ्यः क्त्रः ॥** आन्त्रम् । दित्रम् । मित्रम् । शस्त्रम् ।

**4-164 पुवो ह्रस्वश्च ॥** पुत्रः ।

**4-165 स्त्यायतेर्ड्ट् ॥** स्त्री ।

**4-166 गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥** गोत्रं स्यान्नामवंशयोः । गोत्रा पृथिवी । धर्त्रं गृहम् । वेत्रम् । पक्त्रम् । वक्त्रम् । यन्त्रम् । सन्त्रम् । क्षन्त्रम् ।

**4-167 हुयामाश्रुभसिभ्यस्त्रन् ॥** होत्रम् । यात्रा । मात्रा । श्रोत्रम् । भस्त्रा ।

**4-168 गमेरा च ॥** गात्रम् ।

**4-169 दादिभ्यच्छन्दसि ॥** दात्रम् । पात्रम् ।

**4-170 भूवादिगृभ्यो णित्रन् ॥** भावित्रम् । वादित्रम् । गादित्रमोदनम् ।

**4-171 चरेर्वृत्ते ॥** चारित्रम् ।

**4-172 अशित्रादिभ्य इत्रोत्रौ ॥** अशित्रम् । वहित्रम् । धरित्री मही । त्रैङ् एवमादिभ्य उत्रः । तोत्रं प्रहरणम् । वृञ् वरुत्रं प्रावरणम् ।

**4-173 अमेर्द्विषति चित् ॥** अमित्रः शत्रुः ।

**4-174 आः समिण्निकशिभ्याम् ॥** संपूर्वादिणो निपूर्वात्कषेश्च आ स्यात् । स्वरादित्वादव्ययत्वम् । समया । निकषा ।

**4-175 चित्तेः कणः कश्च ॥** बाहुलकादगुणः । चिक्कणं मसृणं स्निग्धम् ।

**4-176 सूचेः स्मन् ॥** सूक्ष्मम् ।

**4-177 पातेर्डुम्सुन् ॥** पुमान् ।

**4-178 रुचिभुजिभ्यां किष्यन् ॥** रुचिष्यमिष्टम् । भुजिष्यो दासः ।

**4-179 वसेस्तिः ॥** वस्तिर्नाभेरधो द्वयोः । वस्तयः स्युर्दशासूत्रे । बाहुलकात् शासः शास्तिः राजदण्डः । विन्ध्याख्यमगमस्यतीत्यगस्तिः । शकन्ध्वादिः ।

**4-180 सावसेः ॥** स्वस्ति । स्वरादिपाठादव्ययत्वम् ।

**4-181 वौ तसेः ॥** वितस्तिः ।

**4-182 पदिप्रथिभ्यां नित् ॥** पत्तिः । प्रथितिः ।

**4-183 तितुत्रेष्वग्रहादीनामितीट् दृणातेर्ह्रस्वश्च ॥** दृतिः ।

**4-184 कृतॄकृपिभ्यः कीटन् ॥** किरीटं शिरोवेष्टनम् । तिरीटं सुवर्णम् । कृपीटं कुक्षिवारिणोः ।

**4-185 रुचिवचिकुचिकुटिभ्यः कितच् ॥ रुचितमिष्टम् । उचितम् । कुचितं परिमितम् ॥** कुटितं कुटिलम् ।

**4-186 कुटिकुषिभ्यां क्मलन् ॥** कुड्मलम् । कुष्मलम् ।

**4-187 कुषेर्लश्च ॥** कुल्मलं पापम् ।

**4-188 सर्वधातुभ्योऽसुन् ॥** चेतः । सरः । पयः । सदः ।

**4-189 रपेरत एच्च ॥** रेपोऽवद्यम् ।

**4-190 अशेर्देवने युट् च ॥** देवने स्तुतौ । यशः ।

**4-191 उब्जेर्बले बलोपश्च ॥** ओजः ।

**4-192 श्वेः सम्प्रसारणं च ॥** शवः । शवसी । बालपर्यायोऽयम् ।

**4-193 श्रयतेः स्वाङ्गे शिरः किच्च ॥** श्रयतेः शिरआदेशोऽसुन् किच्च । शिरः । शिरसी ।

**4-194 अर्तेरुच्च ॥** उरः ।

**4-195 व्याधौ शुट् ॥** अर्शो गुदव्याधिः ।

**4-196 उदके नुट् च ॥** अर्तेरसुन् स्यात्तस्य च नुट् । अर्णः । अर्णसी ।

**4-197 इण आगसि ॥** एनः ।

**4-198 रिचेर्धने घिच्च ॥** चात्प्रत्ययस्य नुट् । घित्त्वात्कुत्वम् । रेक्णः सुवर्णम् ।

**4-199 चायतेरन्ने ह्रस्वश्च ॥** चनो भक्तम् ।

**4-200 वृङ्शीङ्भ्यां रूपस्वाङ्गयोः पुट् च ॥** वर्पो रूपम् । शेपो गुह्यम् ।

**4-201 स्रुरीभ्यां तुट् च ॥** स्रोतः । रेतः ।

**4-202 पातेर्बले जुट् च ॥** पाजः । पाजसी ।

**4-203 उदके थुट् च ॥** पाथः ।

**4-204 अन्ने च ॥** पाथो भक्तम् ।

**4-205 अदेर्नुम् धौ च ॥** अदेर्भक्ते वाच्येऽसुन् नुमागमो धादेशश्च । अन्धोऽन्नम् ।

**4-206 स्कन्देश्च स्वाङ्गे ॥** स्कन्दः । स्कन्दसी ।

**4-207 आपः कर्माख्यायाम् ॥** कर्माख्यायां ह्रस्वो नुट् च वा । अप्नः । अपः । बाहुलकात् । आपः । आपसी ।

**4-208 रूपे जुट् च ॥** अब्जो रूपम् ।

**4-209 उदके नुम्भौ च ॥** अम्भः ।

**4-210 नहेर्दिवि भश्च ॥** नभः ।

**4-211 इण आग अपराधे च ॥** आगः पापापराधयोः ।

**4-212 अमेर्हुक्च ॥** अंहः ।

**4-213 रमेश्च ॥** रंहः ।

**4-214 देशे ह च ॥** रमन्तेऽस्मिन् रहः ।

**4-215 अञ्च्यञ्जियुजिभृजिभ्यः कुश्च ॥** एभ्योऽसुन् कवर्गश्चान्तादेशः । अङ्कश्चिह्नशरीरयोः । अङ्गः पक्षी । योगः समाधिः । भर्गस्तेजः ।

**4-216 भूरञ्जिभ्यां कित् ॥** भुवः । रजः ।

**4-217 वसेर्णित् ॥** वासो वस्त्रम् ।

**4-218 चन्देरादेश्च छः ॥** छन्दः ।

**4-219 पचिवचिभ्यां सुट् च ॥** पक्षसी तु स्मृतौ पक्षौ । वक्षो हृदयम् ।

**4-220 वहिहाधाञ्भ्यश्छन्दसि ॥** वक्षाः अनड्वान् । हासाश्चन्द्रः । धासाः पर्वत इति प्राञ्चः । वस्तुतस्तु णिदित्यनुवर्तते न तु सुट् । तेन वहेरुपधावृद्धिः । इतरयोः 'आतो युक् – ७-३-३३' इति युक् । शोणा धृष्णू नृवाहसा । श्रोता हवं गृणतः स्तोमवाहाः । विश्वो विहायाः । वाजम्भरो विहायाः । देवो न यः पृथिवीं विश्वधायाः । अधारयत् पृथिवीं विश्वधायसम् । धर्णसिं भूरिधायसमित्यादिः ।

**4-221 इण आसिः ॥** अयाः वह्निः । स्वरादिपाठादव्ययत्वम् ।

**4-222 मिथुनेऽसिः पूर्ववच्च सर्वम् ॥** उपसर्गविशिष्टो धातुर्मिथुनं तन्नासुनोऽपवादोऽसिः । स्वरार्थः ।

**4-223 नञि हन एह च ॥** अनेहाः । अनेहसौ ।

**4-224 विधाञो वेध च ॥** विदधातीति वेधाः ।

**4-225 नुवो धुट् च ॥** नोधाः ।

**4-226 गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वं च ॥** असिः स्यात् । सुतपाः । जातवेदाः । '6-2-139 गतिकारकोपदात् कृत्' इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम् ।

**4-227 चन्द्रे मो डित् ॥** चन्द्रोपपदान्माङोऽसिः स्यात्स च डित् । चन्द्रमाः ।

**4-228 वयसि धाञः** ॥ वयोधास्तरुणः ।

**4-229 पयसि च** ॥ पयोधाः समुद्रो मेघश्च ।

**4-230 पुरसि च** ॥ पुरोधाः ।

**4-231 पुरूरवाः** ॥ पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते ।

**4-232 चक्षेर्बहुलं शिच्च** ॥ नृचक्षाः ।

**4-233 उषः कित्** ॥ उषः ।

**4-234 दमेरुनसिः** ॥ सप्तार्चिर्दमुनाः ।

**4-235 अङ्गतेरसिरि रुडागमश्च** ॥ अङ्गिराः ।

**4-236 सर्तेरप्पूर्वादसिः** ॥ अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ।

**4-237 विदिभुजिभ्यां विश्वे** ॥ विश्ववेदाः । विश्वभोजाः ।

**4-238 वशेः कनसिः** ॥ **सम्प्रसारणम् । उशनाः** ॥

॥ **इत्युणादिषु चतुर्थः पादः** ॥

## पञ्चमः पादः

**5-1 अदि भुवो डुतच्** ॥ अद्भुतम् ।

**5-2 गुधेरूमः** ॥ गोधूमः ।

**5-3 मसेरूरन्** ॥ मसूरः। प्रथमे पादे असेरुरन्मसेश्चेत्यत्र व्याख्यातः ।

**5-4 स्थः किच्च** ॥ स्थूरो मनुष्यः ।

**5-5 पातेरतिः** ॥ पातिः स्वामी । संपातिः पक्षिराजः ।

**5-6 वातेर्नित्** ॥ वातिरादित्यसोमयोः ।

**5-7 अर्तेश्च** ॥ अरतिरुद्वेगः ।

**5-8 तृहेः क्नो हलोपश्च** ॥ तृणम् ।

**5-9 वृञ्लुठितनिताडिभ्य उलच् तण्डश्च** ॥ व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः ।

**5-10 दंसेष्टटनौ न आ च** ॥ दासः सेवकशूद्रयोः ।

**5-11 दंशेश्च** ॥ दाशो धीवरः ।

**5-12 उदि चेर्डैसिः** ॥ स्वरादिपाठादव्ययत्वम् । उच्चैः ।

**5-13 नौ दीर्घश्च** ॥ नीचैः ।

**5-14 सौ रमेः क्तो दमे पूर्वपदस्य च दीर्घः** ॥ रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात् । कित्वादनुनासिकलोपः । सूरत उपशान्तो दयालुश्च ।

**5-15 पूञो यण् णुक् ह्रस्वश्च** ॥ यत्प्रत्ययः । पुण्यम् ।

**5-16 स्रंसेः शिः कुट् किश्च** ॥ स्रंसतेः शिरादेशः यत्प्रत्ययः कित्तस्य कुडागमश्च । शिक्यम् ।

**5-17 अर्तेः क्युरुच्च** ॥ उरणो मेषः ।

**5-18 हिंसेरीरन्नीरचौ** ॥ हिंसीरो व्याघ्रदुष्टयोः ।

**5-19 उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च** ॥ उदरम् ।

**5-20 डित् खनेर्मुट् स चोदात्तः ॥** अच् अल् च डित्स्याद्धातोर्मुट् स चोदात्तः । मुखम् ।

**5-21 अमेः सन् ॥** अंसः ।

**5-22 मुहेः खो मूर्च ॥** मूर्खः ।

**5-23 नहेर्हलोपश्च ॥** नखः ।

**5-24 शीङो ह्रस्वश्च ॥** शिखा ।

**5-25 माङ ऊखो मय् च ॥** मयूखः ।

**5-26 कलिगलिभ्यां फगस्योच्च ॥** कुल्फः शरीरावयवो रोगश्च । गुल्फः पादग्रन्थिः ।

**5-27 स्पृशेः श्वण्शुनौ पृ च ॥** श्वण्शुनौ प्रत्ययौ पृ इत्यादेशः । पार्श्वोऽस्त्री कक्षयोरधः । पर्शुरायुधम् ।

**5-28 श्मनि श्रयतेर्डुन् ॥** श्मन्शब्दो मुखवाची । मुखमाश्रयत इति श्मश्रुः ।

**5-29 अश्र्वादयश्च ॥** अश्रु नयनजलम् ।

**5-30 जनेष्टन् लोपश्च ॥** जटा ।

**5-31 अच् तस्य जङ्घ च ॥** तस्य जनेः जङ्घादेशः स्यादच्च । जङ्घा ।

**5-32 हन्तेः शरीरावयवे द्वे च ॥** जघनम् । पश्चान्नितम्बः स्त्रीकट्याः क्लीबे तु जघनं पुरः ।

**5-33 क्लिशेरन् लो लोपश्च ॥** लकारस्य लोपः । केशः ।

**5-34 फलेरितजादेश्च पः ॥** पलितम् ।

**5-35 कृञादिभ्यः संज्ञायाम् वुन् ॥** करकः । करका । कटकः । नरकम् । नरकः । नरको नारकोऽपि चेति द्विरूपकोशः । सरकं गगनम् । कोरकः कोरकं च ।

**5-36 चीकयतेराद्यन्तविपर्ययश्च ॥** कीचको वंशभेदः ।

**5-37 पचिमच्योरिच्चोपधायाः ॥** पेचकः । मेचकः ।

**5-38 जनेररष्ठ च ॥** जठरम् ।

**5-39 वचिमनिभ्यां चिच्च ॥** वठरो मूर्खः । मठरो मुनिशौण्डयोः । बिदादित्वान्माठरः। गर्गादित्वान्माठर्यः ।

**5-40 ऊर्जि दृणातेरलचौ पूर्वपदान्तलोपश्च ॥** ऊर्दरः शूररक्षसोः ।

**5-41 कृदरादयश्च ॥** कृदरः । कुसूलः । मृदरं विलसत् । सृदरः सर्पः ।

**5-42 हन्तेर्युन्नाद्यन्तयोर्घत्वतत्वे ॥** घातनो मारकः ।

**5-43 क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥** क्रान्तुः पक्षी । गान्तुः पथिकः । क्षान्तुर्मशकः ।

**5-44 हर्यतेः कन्यन् हिर च ॥** कन्यन् प्रत्ययः । हिरण्यम् ।

**5-45 कृञः पासः ॥** कर्पासः । बिल्वादित्वात्कार्पासं वस्त्रम् ।

**5-46 जनेस्तु रश्च ॥** जर्तुर्हस्ती योनिश्च ।

**5-47 ऊर्णोतेर्डः ॥** ऊर्णा ।

**5-48 दधातेर्यत् नुट् च ॥** धान्यम् ।

**5-49 जीर्यतेः क्रिन् रश्च वः ॥** जिव्रिः स्यात्कलपक्षिणोः । बहुलकात् ‘8-2-77 हलि च’ इति दीर्घो न ।

**5-50 मव्यतेर्यलोपो मश्चापतुट् चालः ॥** मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यलोपो मकारश्चान्त्यस्य । ममापतालो विषये ।

**5-51 ऋजेः कीकन् ॥** ऋजीक इन्द्रो धूमश्च ।

**5-52 तनोतेर्डउः सन्वच्च ॥** तितउः । पुंसि क्लीबे ।

**5-53 अर्भकपृथुकपाका वयसि ॥** ऋधु वृद्धो । अतो वुन् । भकारश्चान्तादेशः । प्रथेः कुकन्संप्रसारणं च । पिबतेः कन् ।

**5-54 अवद्यावमाधमार्वरेफाः ॥** कुत्सिते वदेर्नञि यत् । अवद्यम् । अवतेरमः । वस्य पक्षे धः । अवमः । अधमः । अर्तेर्वन् । अर्वा । रिफतेस्तौदादिकादेः । रेफः ।

**5-55 लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ॥** तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट् । लिप्तं श्लिष्टम् । रिप्रं कुत्सितम् ।

**5-56 क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ॥** क्लिशेः कन् स्यात् उपाधाया ईत्वं लस्य लोपो नामागमश्च । कीनाशो यमः । कित्वफलं चिन्त्यम् ।

**5-57 अश्नोतेराशुकर्मणि वरट् च ॥** चकारादुपधाया ईत्वम् । ईश्वरः ।

**5-58 चतेरुरन् ॥** चत्वारः ।

**5-59 प्रादतेररन् ॥** प्रातः ।

**5-60 अमेस्तुट् च ॥** अन्तर्मध्यम् ।

**5-61 दहेर्गो लोपो दश्च नः ॥** गप्रत्ययो धातोरन्तस्य लोपो दकारस्य नकारः । नगः ।

**5-62 सिचेः संज्ञायां हनुमौ कश्च ॥** सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ।

**5-63 व्याङि घ्रातेश्च जातौ ॥** कप्रत्ययः स्यात् । व्याघ्रः ।

**5-64 हन्तेरच् घुर च ॥** घोरम् ।

**5-65 क्षमेरुपधालोपश्च ॥** चादच् । क्ष्मा ।

**5-66 तरतेर्ड्रिः ॥** त्रयः । त्रीन् ।

**5-67 ग्रहेरनिः ॥** ग्रहणिः ङीष् । ग्रहणी व्याधिभेदः ।

**5-68 प्रथेरमच् ॥** प्रथमः ।

**5-69 चरेश्च ॥** चरमः ।

**5-70 मङ्गेरलच् ॥ मङ्गलम् ॥**

**इत्युणादिषु पञ्चमः पादः ॥**